'kh"kde & fpfiVdpo.ke ¼iglue½

lEikndk & jkd'knk'k% t;nofn.Mk p

i/kku lEiknd% & vkpk;Z Jhfuokl oj[kMh
dyx#] d-dk-l-fo-] jkeVde

lEiknd% & vkpk;Z e/kqlwnu% iUuk
lpkyd% l'kks/ku&idk'kufoHkkx%
d-dk-l-fo-] jkeVde

lEiknde.Mye & Mk- fnudj ejkB] d-dk-l-fo-] jkeVd
Mk- ohuk xk.k] ukxij-

idk'kuo"ke & 2020

vkofRr% & iFkek

eY;e & 225-00

vk;-,l-ch-,u- & 978&81&8315&410&9

e[ki"Be & Jh- me'k ikVhy] d-dk-l-fo-] jkeVde

idk'kd% & dylfpo%]
dfodyx#&dkfynkl&lLdr&fo'ofo|ky;%]
i'kkldh;Hkoue] eknkekxL;] jkeVde-

,o

U; Hkkjrh; cd dkjikj'ku
208] f}rh; ry] idk'knhi fcfYMx]
4735@22] vlkjh jkM] nfj;k xt]
ub fnYyh & 110002
Qku u- % 23280214] 23280209

The KK Sanskrit University does not hold any responsibility regarding the content, language, originality, Plagiarism or views expressed by the author of these centenary publication books. The respective author is solely responsible.

,l- d- vkQlV] fnYyh

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

CC-0 Kavikulguru Kalidas Sanskrit University Ramtek Collection

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

**ljLorh Jqfregrh egh;rke~**

Ramtek
10th January 2020

Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.

# Kavikulaguru Kalidas Sanskrit University
# All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Dinakar Marathe
Dr. Kalapini Agasti
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Shrinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

# सूचीपत्रम्



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

## पुरोभाषः

शारदा शारदाम्भोजवदना वदनाम्बुजे।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात्॥

महामहोपाध्यायेन श्रीजीवन्यायतीर्थेन विद्वत्प्रकाण्डेन रचितं चिपिटकचर्वणं नाम प्रहसनम् असकृद् अभिनीतं बहुभिः कुशीलवैः। अद्यत्वे बहुषु विश्वविद्यालयेषु पाठ्यक्रमेषु इदं प्रहसनं पाठक्रमे अपि योजितम् अस्ति। पूर्वं कदाचित् श्रीजीवन्यायतीर्थानां रूपकाणां सङ्ग्रहः रूपकचक्रम् इति नाम्ना १९७२क्रैस्ताब्दे प्रकाशितः आसीत्। तस्मिन् क्षुत्क्षेमीयं, शतवार्षिकं, चिपिटकचर्वणं, तैलमर्दनं, महाकविकालिदासम् इति पञ्च रूपकाणि मुद्रितानि आसन्। तत् च पुस्तकं संस्कृतसाहित्यपरिषदः प्रकाशितम् आसीत्।

तस्मिन् मुद्रिते पुस्तके प्रहसनस्य मूलम् एव प्रकाशितम् आसीत्। तत्र अपि केचन मुद्रणदोषाः आसन् एव। अतः अस्य प्रहसनस्य विशदपरिचयादिसमेतः अयं ग्रन्थः चिकीर्षितः। अस्मिन् ग्रन्थे भूमिकाभागे कवेः परिचयम् अतिरिच्य अपि प्रहसनस्य नाट्यतत्त्वदृष्ट्या विमर्शः उपस्थापितः। ततः मूलं प्रहसनम् उपस्थापितम्। प्रहसने पादटिप्पणीरूपेण कृतसन्धीनां पदानां विसंहितं रूपं प्रदर्शितम्। मूलप्रहसने § इति चिह्नेन चिह्नितानां पदानां व्युत्पत्त्यादिकं परिशिष्टे अकारादिक्रमेण प्रदर्शितम्। प्रहसने प्रयुक्तानां श्लोकानां विशदव्याख्यानम् परिशिष्टे योजितम् अस्ति।

ग्रन्थस्य प्रकाशनाय कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयस्य प्रमुखेभ्यः कार्तज्ञ्यं प्रकट्यते। संस्कृतजनन्याः सेवायां समर्पितम् इदं ग्रन्थप्रसूनं पाठकानां मोदम् उत्पादयतु इति परमेश्वरं प्रार्थयामहे।

राकेशदाशः
जयदेवदिण्डा

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

# कविः श्रीजीवन्यायतीर्थः

सिद्धगौतमकुले जातः आचार्यपञ्चाननतर्करत्नस्य सुयोग्यः आत्मजः विशिष्टः विद्वान् श्रीजीवन्यायतीर्थमहोदयः संस्कृतसाहित्यनभसि नक्षत्रम् इव विराजते। अयं पण्डितमूर्धन्यः १८९२ ईशवीयाब्दस्य जनवरीमासस्य षड्विंशे दिनाङ्के (२६.०१.१८९२) अखण्डवङ्गानां २४परगनामण्डलस्य (अधुना पश्चिमवङ्गस्य उत्तरचब्बिशपरगनामण्डलस्य) भट्टपल्ल्यां (भाटपाडा इति प्रसिद्धे स्थाने) जनिं लब्धवान्। अस्य जनकः पण्डितप्रकाण्डं पञ्चाननतर्करत्नः संस्कृतजगति पञ्चानन इव व्यराजत। बहूनां पुराणादिग्रन्थानां सम्पादनेन, तेषां वङ्गानुवादेन, ब्रह्मसूत्राणां शक्तिभाष्यप्रणयनेन, अन्येषां विशिष्टानां शास्त्रीयग्रन्थानां प्रणयनेन च संस्कृतविद्यायाः प्रपञ्चे अविस्मरणीयं योगदानम् अकार्षीद् एष विद्वत्तल्लजम्। अस्य नन्दनः श्रीजीवन्यायतीर्थः अपि पितुः वैदुष्यपरम्पराम् अग्रे सारयन् समेषां संस्कृताभिमानिनां श्रद्धाभाजनम् अभूत्।

पितुः पञ्चाननतर्करत्नमहोदयस्य चतुष्पाठ्यां सुपद्मव्याकरणस्य अध्ययनेन श्रीजीवन्यायतीर्थस्य विद्यारम्भः अभवत्। तस्मिन् काले वङ्गेषु कालाप-मुग्धबोध-सुपद्म-संक्षिप्तसार-हरिनामामृतादीनां बहूनाम् अपाणिनीयव्याकरणानाम् अध्ययनं सुप्रचलितम् आसीत्। पितुः सकाशे प्रारम्भिकम् अध्ययनं समाप्य अयं कलिकातानगरीं प्राप्तः। तत्र संस्कृत-कलेजियेट्-विद्यालये अस्य प्रगताध्ययनं प्रारब्धम्। रिपन्-कॉलेज-नामकात् (अधुना सुरेन्द्रनाथमहाविद्यालयः इति प्रसिद्धात्) प्रतिष्ठानात् संस्कृतविभागे बि.ए.स्तरीयम् अध्ययनं समाप्य कलिकाताविश्वविद्यालयतः एम्.ए.-उपाधिम् अपि अयम् अध्यगमत्। तत्र प्रथमस्थानम् अधिकुर्वन् अयं स्वर्णपदकेन सभाजितः। ततः पितुः आग्रहेण शास्त्रचर्चायाः पीठस्थानं वाराणसीं प्राप्तवान् श्रीजीवः। तत्र महामहोपाध्यायस्य राखालदासन्यायरत्नस्य समीपे प्राचीननवीनन्यायशास्त्रयोः आमूलचूडम् अध्ययनम् अकरोत् श्रीजीवः। तत्र न्याय-साहित्य-व्याकरणशास्त्रेषु पाटवं सम्पाद्य 'न्यायतीर्थः', 'काव्यतीर्थः', 'व्याकरणतीर्थः' इति उपाधिभिः भूषितोऽयं पण्डितश्रेष्ठः।

हरप्रसादशास्त्रिणां मार्गनिर्देशने श्रीजीवेन 'आधुनिकतर्कविज्ञानस्य क्रमविवर्तनम्' (Evolution of Modern Logic) इति शोधबन्धं विरचय्य पि.एच्.डि.-उपाधिः समधिगतः। अयं शोधबन्धः अनन्तरकाले 'न्यायसूत्रस्य प्राचीनत्वम्' (Antiquity of *Nyāya-sūtra)* इति नाम्ना कलिकाताविश्वविद्यालयात् प्रकाशितः।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



अध्ययनं समाप्य सः अध्यापनजीवनस्य प्रारम्भे पितृदेवस्य चतुष्पाठ्याम् अध्यक्षत्वेन पाठनं प्रारब्धवान्। तदनन्तरम् ऋषिवङ्किमचन्द्रमहाविद्यालये अध्यापकपदवीम् अलञ्चकार। ततः कलिकाताविश्वविद्यालयस्य संस्कृतविभागे (१९३७-५८) अध्यापकरूपेण सः अध्यापनम् अकार्षीत्। ततः स यादवपुरविश्वविद्यालयस्य संस्कृतविभागे (१९५९-६८) अध्यापनं चकार। स दीर्घकालं यावत् संस्कृतमहाविद्यालयस्य अध्यक्षपदम् अलङ्कृतवान्।

बहुभिः उपाधिभिः सभाजितः काव्यव्याकरणन्यायतीर्थः विद्वत्प्रवरः अयं कलिकाताविश्वविद्यालयेन तथा वर्धमानविश्वविद्यालयेन १९७२ क्रैस्ताब्दे डि.लिट्. इत्युपाधिना सम्मानितः। १९६८ ईशवीयाब्दे भारतवर्षस्य महामहिमेन राष्ट्रपतिना अयं सत्कृतः। प्रयागविद्वत्सङ्गोष्ठ्या 'महामहिमोपाध्यायः', नवद्वीपपण्डितसमाजेन 'व्याकरणशिरोमणिः', हाओडासंस्कृतसाहित्यसमाजेन 'महाकविः', विश्वभारतीविश्वविद्यालयेन 'देशिकोत्तमः', उत्तरप्रदेशसंस्कृताकादम्या १९८९ इशवीयाब्दे 'संस्कृतभारती', वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'महामहोपाध्यायः' इत्यादिभिः विविधैः बिरुदैः सम्भूषितः अयं पण्डितमूर्धन्यः।

शास्त्रचर्चया समम् एव विविधानि काव्यानि रचयित्वा एषः कवित्वयशसा अमृतत्वं भजते। तस्य विविधानि रूपकाणि साहित्यस्य अभिनवान् मानदण्डान् स्थापयन्ति। १९२६ ईशवीयाब्दे अस्य प्रथमप्रकाशनम् आसीत्, अन्तिमप्रकाशनञ्च १९८५ ईशवीयसंवत्सरे आसीत्। अस्य सारस्वतसृष्टिः निरवच्छिन्नरूपेण षष्टिं वर्षाणि प्राचलत्। शतायुरयं विद्वद्धौरेयः महाकविः १९९२ क्रैस्ताब्दे मरशरीरम् अत्यजत्।

तस्य काव्यसंसारः इत्थम्–

**श्रव्यकाव्यानि**

१.पाण्डवविक्रमम् (अष्टादशसर्गात्मकमहाकाव्यम्)
२.सारस्वतशतकम् (चित्रकाव्यम्)
३.ऋतुचक्रचङ्क्रमणम् (गीतिकाव्यम्)

**दृश्यकाव्यानि**

क) **नाटकानि**– १.महाकविकालिदासम्, २.साम्यसागरकल्लोलम्, ३.श्रीशङ्कराचार्यवैभवम्, ४.नागनिस्तारम्, ५.स्वातन्त्र्यसन्धिक्षणम्, ६.विवेकानन्दचरितम्, ७.निगमानन्दचरितम्, ८.सिन्धुसौवीरसङ्गामम्, ९.श्रीकृष्णकौतुकम्, १०.रघुवंशम्, ११.कुमारसम्भवम्

ख) **प्रकरणम्**– १.माधुरीसुन्दरम्
ग) **भाणः**– १.विधिविपर्यासम्, २.पुरुषपुङ्गवः
घ) **व्यायोगः**– १.कैलासनाथविजयम्, २.गिरिधरसंवर्द्धनम्
ङ) **प्रहसनम्**– १.विवाहविडम्बनम्, २.चण्डताण्डवम्, ३.भट्टसङ्कटम्, ४.पुरुषरमणीयम्, ५.क्षुत्क्षेमीयम्, ६.शतवार्षिकम्, ७.चिपिटकचर्वणम्, ८.रागविरागम्, ९.वनभोजनम्, १०.रामनामदातव्यचिकित्सालयम्, ११.दरिद्रदुर्दैवम्, १२.चौरचातुरीयम्, १३.नष्टहासम्।

एतानि विहाय अपि अस्य स्फुटकाव्यानि अनूदितानि च काव्यानि विदुषां विस्मयम् आवहन्ति। संस्कृतसाहित्यस्य प्रायः सर्वान् विधान् स्वलेखन्या पृष्टवतः अस्य विदुषः प्रबन्धः, रम्यरचना, प्रशस्तिगाथा, शोकगीतिः, अनूदितकाव्यं चेत्यादीनि बहूनि विराजन्ते।

[आधमर्ण्यम्– ऋताचट्टोपाध्यायायाः नारायणदाशस्य च]



# चिपिटकचर्वणस्य कथावस्तु नामकरणं च

चिपिटकचर्वणस्य नायकः कपाली धनलोभी अतिकृपणः च। एकदा खञ्जः भृत्यः पङ्गुरामः कपालिनः छिन्नपादुकायुगलं पथि अक्षिपत्। कुब्जपृष्ठा दासी मन्थरा कपलिनः जीर्णं पुरातनं शतच्छिद्रं छिन्नच्छत्रम् अपि मार्गे न्यक्षिपत्। मार्गेण आगच्छन् कपाली पतितं छत्रं दृष्ट्वा कुपितः यदा विचारितवान् तदा ज्ञातं यत् पादुका अपि भृत्येन क्षिप्ता। कपाली भृत्यौ भर्त्सयन् आसीत् तदा एव सहसा मुखेन पादुकाम् आदाय कश्चन सारमेयः अधावत्। कपाली सर्वं विस्मृत्य जीर्णं छत्रं कक्षे निधाय सारमेयस्य पृष्ठतः अधावत्। अल्पीयसा एव कालेन स च्छत्रेण शुनकं प्रहृत्य तस्य मुखात् पादुकाम् आच्छिद्य गृहं समागतः। किन्तु प्रहृतः सारमेयः तं दष्टवान्। प्रहारसमये जीर्णं तत् छत्रम् अपि भग्नम्।

सारमेयदष्टं रुधिराक्तं कपालिनं गृहं प्रत्यागच्छन्तं दृष्ट्वा भार्या रङ्गिणी व्यस्ता अभूत्। भीता चिन्तिता च रङ्गिणी वैद्यस्य आह्वानाय मन्थरां प्रैषयत्। कपालिनि गृहं समागते तस्य शयनाय नूतनं कटम् एकम् आस्तृणोत्। कपाली नूतनकटस्य विस्तारणाय ताम् अतर्जयत्। वैद्यः आगम्य च्छिन्नकटे शयानं कपालिनं दृष्ट्वा कपालिनः विषये दुष्टं चिन्तयेत् इति कथितवत्यां रङ्गिण्यां कपाली अधिकम् अकुप्यत्। यतः आगते वैद्ये तस्मै दर्शनी देया। तेन धनहानिः स्यात्। वैद्यस्य दर्शनीं कः दास्यति इति पृच्छन्तं कपालिनं रङ्गिणी अबोधयत् यत्, प्राणाः दर्शन्याः मूल्यवत्तराः इति। तावता मन्थरया दर्शितमार्गः वैद्यः गृहं प्राविशत्। कपालिनः हस्तनाडीं परीक्ष्य वैद्यः असूचयत् यद् अयं गृहस्वामी नूनम् एव क्रुद्धेन शुनकेन दष्टः। इदानीं तस्य कृत्यम् एष वैद्यः ज्ञास्यति इति भयेन कपाली तूष्णीम् अशेत। एतेन रङ्गिण्याः चिन्ता अवर्धत। वैद्यः अपि कपालिनं मूर्छितप्रायं दृष्ट्वा तस्य विषविकारम् अनुमितवान्। सः असूचयत् यत् लालाक्लिन्नः शुनकः एनं दष्टवान्। शुनकस्य लालया शरीरे प्रविष्टं विषं जलातङ्करोगस्य सम्भावनां जनयति। तत्प्रयुक्तः विकारः कपालिनम् आक्रामति इति। एतस्मात् रक्षणाय झटिति गव्यघृतम् उष्णदुग्धेन समं रोगी पिबेत्। इदम् आकर्ण्य कपाली गव्यघृतस्य व्ययेन आशङ्कितः स्वगतं वैद्यं निन्दितुं प्रारभत। एतेन तस्य अधरस्पन्दनं दृष्ट्वा रङ्गिणी अधिकं दुश्चिन्तासक्ता। वैद्यः अपि एतद् दृष्ट्वा विकारस्य लक्षणं वर्धते इति सूचयित्वा शुनकदष्टस्य स्थानस्य तप्तायःशलाकया दाहस्य निदानम् अवदत्। यदि तथा न क्रियेत तर्हि अयं रोगी स्वयम् उन्मत्तशुनकः इव बुक्कन् सर्वान् दङ्क्ष्यति स्वयं च ततः मरिष्यति, तस्य दंशनेन अन्ये अपि तथा बुक्कन्तः

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

मरिष्यन्ति इति सूचितवान्। कपाली भीतः क्रुद्धः च अचिन्तयद् यद् वैद्यः तस्य शरीरे बृहत्तरं क्षतम् उत्पाद्य अधिकं धनं प्रेप्सुः अस्ति। अतः यदा लोहशलाकादीन् व्यवस्थापयितुं रङ्गिणी निर्गता तदा कपाली सारमेयवत् नखदन्तादिभिः वैद्यम् आक्रमितुम् उद्युक्तः। तेन भीतः वैद्यः कथम् अपि पलायितः।

रङ्गिणी प्रत्यागत्य वैद्यम् अदृष्ट्वा यदा अपृच्छत् वैद्यः कुत्र इति तदा कपाली उक्तवान् यत्, वैद्यः औषधं सङ्ग्रहीतुं गृहं गतवान्। वैद्यस्य आगमने विलम्बं दृष्ट्वा रङ्गिणी पल्ल्यां विश्रुतं बहुविधरोगाणां परिहर्तारं तान्त्रिकम् आह्वातुं निर्गता।

अनन्तरं प्रतिवेशिभिः अनुरुद्धः कपटवेशधारी तान्त्रिकः प्रविशति। स केनचित् कौशलेन महाकृपणस्य गृहस्वामिनः सकाशात् किञ्चित् धनम् अपहृत्य रङ्गिण्यै प्रदातुं कृतसङ्कल्पः आसीत्। तान्त्रिकः आत्मानं तन्त्रमन्त्रविद् इति परिचाययति। कपालिनः शरीरात् प्रवहन्त्याः रुधिरधाराया निवारणाय क्षतस्थाने शर्कराचूर्णस्य लेपनसमये स कम् अपि विचित्रं मन्त्रम् उदचारयत्। शर्करायाः क्षतस्थाने लेपनात् सद्य एव शोणितप्रवाहः स्थगितः। रुधिररोधस्तु शर्करया एव न तु मन्त्रगुणात् इति ज्ञात्वा कपाली तान्त्रिकं प्रवञ्चकं ज्ञातवान्। किन्तु स तान्त्रिकस्य प्रवञ्चकत्वं प्रमाणयितुं यदा प्रयतितवान् तदा तान्त्रिकः चातुर्यपूर्णवाक्यैः कपालिनः चरितोद्घाटनं करोति स्म। एतेन कपाली उपायान्तरम् अप्राप्य नवीनोपायस्य अन्वेषणाय तान्त्रिकेण उक्तम् आचरितुं सिद्धः जातः। तान्त्रिकः विषविकारनाशाय शान्तिकर्म कर्तव्यम् इति असूचयत्। तत्र शान्तिकर्मणि तान्त्रिकस्य दक्षिणा कियती इति पृष्टः तान्त्रिकः एकं हरीतकीफलम् अस्य कर्मणः दक्षिणा इति अवदत्। कपालिनः निरीक्षा आसीत् यत् तान्त्रिकः अधिकं धनं याचिष्यते। तेन तान्त्रिकस्य कपटता प्रकटिता स्यात्। किन्तु तान्त्रिकस्य वचनेन कपाली पराभूतः। कपाली तस्मै हरितकीफलद्वयं प्रतिशृणुते। अधिकं गृहीतं चेत् मन्त्रापराधः स्यात् इति उक्त्वा तान्त्रिकः तद् अपि निराकरोत्। एतेन समधिकं प्रभावितं कपालिनं तान्त्रिकः अवदत् यत् विषनाशाय क्रियमाणं शान्तिकर्म मासत्रयं यावत् चलिष्यति। तत्र घटे पञ्चरत्नदानकाले यत् सुवर्णं दीयते तत् त्रिगुणितं भविष्यति। एतद् उक्त्वा स नाम्ना परिचितयोः कस्यचित् दैवज्ञस्य अनुग्रहात् लब्धधनयोः द्वयोः विशिष्टयोः धनिकयोः नाम उक्त्वा तयोः धनलाभे सहायकः स एव इति प्रत्यपादयत्।

ततः तान्त्रिकः अवदत् यत् एतस्य कर्मणः सफलतायै मासत्रयं परिवारसदस्यैः चिपिटकचर्वणव्रतं परिपालनीयम्। अत्र व्रते सर्वे अपि मासत्रयं यावत् केवलं चिपिटकम् एव भक्षयेयुः इति नियमः। एतेन मासत्रयं यावद् गृहे





व्यये न्यूनतां परिलक्ष्य सन्तुष्टः कपाली घटे स्थापनाय तान्त्रिकाय सुवर्णं दातुं सिद्धः अभवत्। यद्यपि परीक्षायै स आदौ एकतोलकं सुवर्णम् एव दातुम् ऐच्छत् किन्तु तान्त्रिकः तं कल्पितेन शास्त्रवचनेन अबोधयत् यत् स्वर्णत्रैगुण्यकर्मणि दश, विंशतिः इत्येवं शून्ययुताङ्कमितं सुवर्णम् एव देयम् अन्यथा सर्वनाशः भवेत्। उपायान्तरम् अप्राप्य कपाली दश तोलकानि सुवर्णस्य दातुम् अङ्गीकृतवान्।

घटे सुर्वणं स्थापयित्वा वस्त्रेण आच्छाद्य तान्त्रिकः आफिम-निद्राचूर्णादिमिश्रितं घटजलं कपालिने प्रादात्। तेन मूर्छां गतः कपाली। तदा तान्त्रिकः झटिति एव कलशात् स्वर्णम् अपहृत्य पलायितः। एतावता अल्पबुद्धिः पङ्कुरामः गृहं प्रविश्य कर्तारं सुखेन निद्राणं दृष्ट्वा पार्श्वे पूजास्थानं कल्पितं दृष्ट्वा कपालिनः पादुकायुगलम् आसने स्थापयित्वा पादुकादेव्याः प्रीत्युत्पादनाय पूजां प्रारब्धवान्। यतः पादुकायाः कारणाद् एव तस्य महत् कष्टं जातम् आसीत्। स्वयम् अलक्ष्यतया स्थितः तान्त्रिकः एतत् दृष्ट्वा झटिति गृहं प्रविश्य कपालिनं जागरयित्वा अवदत् यत् दासस्य स्पर्शेन घटस्थितं सुवर्णं जले द्रवीभूतम् अस्ति इति।

भीतः चिन्तितः कपाली पुनः तान्त्रिकेण सान्त्वितः। तान्त्रिकः उक्तवान् यत्, पुनः यदि विंशतिः तोलकानि सुवर्णस्य दास्यति कपाली तर्हि तत् षष्टितोलकमितं भवेत्। नष्टं धनम् अपि कपाली स्वयं तदीया भार्या वा नूनम् एव प्राप्स्यति इति तान्त्रिकः अवोचत्।

वस्तुतः तान्त्रिकः बहिः गत्वा घटात् अपहृतं सुवर्णं प्रतिवेशिने दत्त्वा रङ्गिण्यै सुवर्णदानाय असूचयत्। प्रतिवेशी अपि दशतोलकमितं स्वर्णं रङ्गिण्यै समर्पितवान्। एतेन रङ्गिण्याः अपि चिपिटकचर्वणे श्रद्धा उत्पन्ना। रङ्गिणी स्वगतम् एतद् वदन्ती गृहं प्रविश्य प्रकाशम् अवोचत् यत् पत्युः जीवनरक्षायै सा अवश्यमेव चिपिटकचर्वणव्रतं पालयिष्यति इति। तावता भृत्यौ अपि तथा कर्तुं सिद्धौ जातौ।

अत्र दृश्यते कृपणस्य कपालिनः मूर्खतावशात् तस्य धननाशः सम्पन्नः। किन्तु अन्ते तान्त्रिकस्य कौशलेन तस्य भार्या किञ्चिद् धनं प्राप्नोत्। अपि च कपालिनः गृहे अपि सर्वेषां किञ्चित् साम्मनस्यम् उत्पन्नम् इति। प्रेक्षकाः च अद्भुतेन एतेन प्रहसनेन अनाविलं हर्षं विशुद्धं रसं च अन्वभूवन् इति।



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

# नाट्यतत्त्वगताः विचाराः

**प्रहसनम्**

श्रीजीवन्यायतीर्थेन विरचितं हास्यरसाश्रितम् एकाङ्कयुतं चिपिटकचर्वणम् इति प्रहसनम्। किं तावत् प्रहसनम्? साहित्यदर्पणे उक्तम्–

भाणवत् सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।
भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्॥
अत्र नारभटी नापि विष्कम्भकप्रवेशकौ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा॥

[साहित्यदर्पणे– ६।२६४।]

यथा भाणाख्यरूपके सन्धीनां सन्ध्यङ्गानां लास्याङ्गानाम् अङ्कसङ्ख्यायाः च व्यवस्था वर्तते तथा एव प्रहसने व्यवस्था। किन्तु प्रहसने कविकल्पितानां निन्द्यानां चरितानां वृत्तम् आश्रित्य रूपकं प्रस्तूयते।

भाणाख्यरूपके मुखनिर्वहणे सन्धी, तद्गतानि सन्ध्यङ्गानि, दश लास्याङ्गानि, एकः अङ्कः च व्यवस्थापितः दृश्यते। तथाहि–

भाणः स्याद् धूर्तचरितो नानावस्थान्तरात्मकः।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः॥
.......................................................
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च॥

[साहित्यदर्पणे– ६।२२७-२३०।]

मुखनिर्वहणाभ्यां सन्धिभ्यां, यथासम्भवं सन्ध्यङ्गैः, लास्याङ्गैः, एकेन अङ्केन च विनिर्मितं, कविकल्पितं पुराणेतिहासादिषु अप्रसिद्धं निन्दनीयस्य जनस्य जनानां वा चरितम् आश्रित्य हास्यरसप्रधानं रूपकं प्रहसनं भवेत्। किञ्च प्रहसने आरभटी वृत्तिः न भवेत्, तथा विष्कम्भकप्रवेशकौ अपि न भवेताम्। किञ्च वीथ्यङ्गानि अत्र न भवेयुः।

दशरूपकस्य नये प्रहसनं त्रिविधम्। तथाहि–

तद्वत्प्रहसनं त्रेधा शुद्धवैकृतसङ्करैः।
पाखण्डिविप्रप्रभृतिचेटचेटीविटाकुलम्।
चेष्टितं वेषभाषादिभिः शुद्धं हास्यवचोन्वितम्॥ इति।

[दशरूपके–३।५४-५५]

त्रिविधेषु प्रहसनेषु प्रहसनम् इदं शुद्धम्। यतः अत्र पाखण्डी, विप्रः, चेटः,

CC-0 Kavikulguru Kalidas Sanskrit University Ramtek Collection



चेटी, विटः प्रमुखानि पात्राणि स्वीयैः व्यवहारैः हास्यप्रयोजकवचोभिः वा हास्यं पुष्णीयुः। अस्मिन् रूपके तु तान्त्रिकस्य चरितं पाखण्डिनः चरितम्। यतः सः अत्र प्रवञ्चनम् एव मुख्यतया करोति। कपाली कश्चन श्रेष्ठी। स द्विजः भवति। कपालिनः भृत्यः पङ्गुरामनामधेयः चेटः। कपालिनः भृत्या कुब्जा मन्थरा चेटी। एतेषां चेष्टितेन भाषादिभिः च हासः अत्र व्यज्यते। अतः इदं प्रहसनं शुद्धं प्रहसनम्।

एतेषु चरितेषु सूत्रधारस्य, तान्त्रिकस्य, कपालिनः, वैद्यस्य, रङ्गिण्याः च भाषा संस्कृतम् अस्ति। विदूषकस्य, पङ्गुरामस्य, मन्थरायाः च प्राकृती भाषा। चरितानां भाषाविषये नियमः इत्थम्–

पुरुषाणाम् अनीचानां संस्कृतं स्यात् कृतात्मनाम्।
चेटानां राजपुत्राणां श्रेष्ठानां चार्धमागधी।
प्राच्या विदूषकादीनां धूर्तानां स्यादवन्तिजा॥

[साहित्यदर्पणे–६।१५८, १६०-१६१]

**नान्दी प्रस्तावना च**

अस्य प्रहसनस्य नान्दी अष्टपदा पत्रावली नान्दी। तस्य विषये विस्तृतं विवेचनम् परिशिष्टांशे नान्दीश्लोकस्य व्याख्यानांशे प्रस्तोष्यते।

प्रस्तावना नाम–

नटो विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत् तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥

[साहित्यदर्पणे–६।३१-३२]

अत्र अपि नान्द्यन्ते विदूषकेण सूत्रधारस्य संलापः वर्तते। तत्र स्वस्य कृत्यानि कथयद्भ्यां सूत्रधारविदूषकाभ्यां प्रस्तुतस्य प्रहसनस्य विषयः उत्थापितः अस्ति। अस्यां प्रस्तावनायाम् अन्ते सूत्रधारः विदूषकेण सह कपालिनः सादृश्यम् उद्भावयति। ततः उभौ अपि प्रतिष्ठेते। ततः सूचितः कपाली प्रविशति। अतः अत्र अवगलितं नाम प्रस्तावना। तस्य लक्षणम् इत्थं कथ्यते–

यत्रैकत्र समावेशात् कार्यम् अन्यत् प्रसाध्यते।
प्रयोगे खलु तज् ज्ञेयं नाम्नाऽवगलितं बुधैः॥

[साहित्यदर्पणे–६।३८]

यत्र प्रस्तावनायाम् एकस्मिन् विषये उपस्थितस्य अन्यस्य उपस्थाप्यमानस्य च पात्रस्य सादृश्योद्भावनेन पात्रप्रवेशरूपं कार्यं साध्यते तत्र अवगलितं नाम प्रस्तावना बुधैः ज्ञातव्या इति अस्य अर्थः।

**अर्थप्रकृतयः**

रूपके अर्थप्रकृतयः यथाविधि योजनीयाः इति नाट्यतत्त्वविदः अभिप्रयन्ति। अर्थप्रकृतयः पञ्च। बीजं, बिन्दुः, पताका, प्रकरी, कार्यम् इति। तथाहि–

अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि।
अल्पमात्रं समुद्दिष्टं बहुधा यद् विसर्पति॥
फलस्य प्रथमो हेतुर्बीजं तद् अभिधीयते।

[साहित्यदर्पणे–६।६५-६६]

रूपके यत् फलत्वेन प्रदर्श्यते तस्य सूक्ष्मरूपेण प्रदर्शनं बीजम् इति उच्यते। अस्मिन् प्रहसने फलं कपालिनः परिवारस्य सर्वैः सदस्यैः बलात् चिपिटकचर्वणव्रतस्य पालनम्। तत् प्रस्तावनायां सूक्ष्मरूपेण सूचितम्। यथा "चिपिटकचर्वणं बलात् कारयित्वा छलात् तन्नामकम्..." इत्यपि सूत्रधारोक्तं वक्तव्यम्। इदम् एव अग्रे विस्तरशः प्रतिपादयिष्यते प्रहसने।

प्रसङ्गतः अत्र इतिवृत्तस्य विषये अपि अल्पशः चर्चामहे। प्रकृते प्रहसने कपाली एव बलात् परिवारसदस्यैः चिपिटकचर्वणं कारयति। अतः फलस्य अधिकारी कपाली। कपालिचरित्राश्रिता कथा अत्र आधिकारिकम् इतिवृत्तम्। तस्य चिपिटकचर्वणव्रतपालने सहायका भवन्ति वैद्यतान्त्रिकादयः। अतः तेषां कथा प्रासङ्गिकं वृत्तम् इति कल्पनीयम्।

वस्तुतः सूत्रधारः नान्द्याः परं मञ्चं समागत्य रूपकस्य इतिवृत्तं, बीजं, मुखं, पात्रम् इत्येतेषु चतुर्षु यथेच्छं वस्तूनि सूचयेत् इति निदानम्। प्रकृतप्रहसने सूत्रधारः कोजागरे चिपिटचर्वणेत्यादिना श्लोकेन चिपिटकचर्वणरूपम् इतिवृत्तं कपाली इति पात्रं च सूच्यते।

अथ बिन्दुः विचार्यते। यत्र कथायाम् अवान्तरप्रसङ्गेन मूलकथायाः धारा छिद्यते तत्र एव पुनः कथायाः अग्रे सारणार्थं किञ्चिद् वचनं वृत्तं वा यदि अग्रिमकथायाः संयोगस्थलं भवति तद् बिन्दुः इति कथ्यते। तथाहि–

अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्॥

[साहित्यदर्पणे–६।६६]

यथा जले पतितः तैलबिन्दुः क्रमशः प्रसरति सर्वं च जलं व्याप्नोति तथा इदं वचनं वृत्तं वा बिन्दुरूपेण आरभ्य विस्तृतं भवति इति कारणेन इदं वृत्तं

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





वचनं वा बिन्दुः इति कथ्यते। अस्मिन् प्रहसने छत्रपादुकयोः क्षेपणात् भृत्याभ्यां भार्यायै च क्रुध्यन् कपाली शुनकमुखात् पादुकाम् आनेतुं बहिः अधावत्। एतेन कथायाः मुख्यं फलं दूरम् अपास्तं दृश्यते। ततः स शुनकेन दष्टः प्रत्यावर्तते। शुनकदंशनकारणाद् एव वैद्यस्य आगमनं ततश्च वैद्ये पलायिते तस्य चिकित्सार्थं तान्त्रिकस्य आगमनेन मुख्यफलस्य अवाप्तिः सञ्जायते। अतः शुनकदंशनम् अत्र बिन्दुः इति अस्माकं मतिः।

ततः प्रासङ्गिकेतिवृत्तयोः द्वौ भेदौ। पताका प्रकरी च। दशरूपककारः कथयति–

प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः।
सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक्॥

[दशरूपके–१।१३]

एतयोः प्रासङ्गिकेतिवृत्तयोः मध्ये यस्य चरितस्य दीर्घकालं यावद् उपस्थितिः तद् वृत्तं पताका इति कथ्यते। यद् वृत्तं क्वचित् प्रसङ्गे आरभ्य शीघ्रं समाप्यते तत् प्रकरी इति कथ्यते। एतयोः प्रसङ्गयोः नायकस्य सहायका अन्ये भवन्ति। पताकाप्रसङ्गस्य सहायकः पताकानायकः इति, प्रकरीप्रसङ्गे सहायकः प्रकरीनायकः इति च कथ्यते। अनयोः पताकानायकस्य स्वकीयं किञ्चन अवान्तरफलम् अपि वर्ण्यते। किन्तु तत् फलावाप्तिकथनं गर्भसन्धौ विमर्शसन्धौ निर्वहणसन्धौ वा भवति।

पताकानायकस्यापि स्यात् स्वकीयफलान्तरम्।
गर्भे सन्धौ विमर्शे वा निर्वाहस्तस्य जायते॥

[साहित्यदर्पणे–६।६६]

अस्मिन् प्रहसने रङ्गिण्याः चरितं पताकानायकचरितम् इति कथयितुं शक्यते। रङ्गिणी कपालिनः भार्या, किन्तु कपालिना सह तस्याः यः व्यवहारः तत्र शृङ्गारस्य लेशः अपि नास्ति। अपि च रङ्गिण्या सह कपाली सर्वदा कलहायते एव। वस्तुतः रङ्गिणी कपालिनः परिवारस्य चिपिटकचर्वणरूपफलसिद्धौ सहायिका भवति। यतः सा एव तान्त्रिकम् आह्वयति। प्रहसने आन्तं तस्याः उपस्थितिः वर्तते। तस्याः अवान्तरफलम् अपि वर्णितं वर्तते निर्वहणसन्धौ। यथा "लब्धं दशतोलकं सुवर्णं प्रतिवेशिभिर्दत्तम्।"

तान्त्रिकस्य चरितम् अपि पताकाचरितम्। यतः सः अपि कपालिनः कार्यसिद्धौ सहायकः। सः अपि निर्वहणसन्धिं यावत् प्रहसने उपस्थितः अस्ति। तस्य एव कथनेन परिवारजनाः चिपिटकचर्वणे प्रवृत्तः। तस्य च अभीष्टम् आसीत्

कपालिनः धनम् अपहृत्य रङ्गिण्यै प्रदानम्। तथाहि "अनुरुद्धोऽहं प्रतिवेशिभिर्यद् इमं महाकृपणं श्रेष्ठिनं वञ्चयित्वा तदीयभार्यायै दीयतां कियांश्चिद् अर्थ इति। ततश्च कृततान्त्रिकपकटवेष एषोऽहं कौशलेन प्रथमं तन्मनः कर्दमवन्मर्दयन् निष्कासयामि सलिलवत् किञ्चिद् धनम्।" निर्वहणसन्धौ तस्य अपि अभीष्टं फलं लब्धम् अस्ति।

अथ यद् अवान्तरवृत्तम् अल्पेन कालेन अवसीयते तत् प्रकरीवृत्तम् इति कथ्यते। तस्य वृत्तस्य नायकसहायकचरितं हि प्रकरीनायकः। अस्य किञ्चिद् अपि फलं न वर्ण्यते।

प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता।
प्रकरीनायकस्य स्यान्न स्वकीयं फलान्तरम्॥

[साहित्यदर्पणे-६।६७]

अस्मिन् प्रहसने वैद्यस्य चरितं प्रकरीनायकस्य चरितम्। वैद्यः मध्ये प्रविश्य किञ्चित्कालं स्थित्वा उपरमते। तम् आश्रित्य किञ्चन वृत्तम् अपि घटते। स वस्तुतः विषविकारसूचनेन रङ्गिणीम् उद्वेजितवान्। तेन उद्विग्ना रङ्गिणी एव विषविकारनाशाय तान्त्रिकम् आह्वयत्। अतः परोक्षतः वैद्यः कार्यसिद्धौ सहायकः जातः। क्षतस्थानस्य दाहस्य व्यवस्थायै निर्गतायां रङ्गिण्यां कपाली शुनकायमानः वैद्यं भाययित्वा दर्शनीं विना एव तं विताडितवान्। तेन वैद्यस्य किञ्चिद् अपि फलं न लब्धम्। अतः वैद्यस्य चरितं प्रकरीनायकस्य चरितम् इति कथनं युज्यते।

अथ कार्यम्। कार्यं नाम प्रहसनस्य फलरूपेण वर्णितं वस्तु। अत्र कार्यं तु परिवारस्य बलात् सर्वेषां चिपिटकचर्वणम्।

अपेक्षितं तु यत् साध्यम् आरम्भो यन्निबन्धनः॥
समापनं तु यत्सिद्ध्यै तत्कार्यम् इति सम्मतम्।
अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः॥
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः।
भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये॥
प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः।
उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः॥
अपायाभावतः प्राप्तिनियताप्तिस्तु निश्चिता।
सावस्था फलयोगः स्याद्यः समग्रफलोदयः॥

[साहित्यदर्पणे-६।६९-७३]

यत् फलम् उद्दिश्य प्रयत्नः आरभ्यते यस्य प्राप्त्या च कथा समाप्यते





तद् एव रूपके फलम्। अत्र फलं चिपिटकचर्वणम् इति स्पष्टीकृतं पूर्वम्। तस्य कार्यस्य पञ्च अवस्थाः भवन्ति। आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः, फलागमः च।

फलावाप्तये यत् औत्सुक्यं जायते तत् **आरम्भः** इति कथ्यते। प्रकृतप्रहसने तान्त्रिकेण उक्तं, "शान्तिकाले गृहजनानां केनापि नान्नं न गोधूमचूर्णं न दुग्धं न घृतं न फलं मिष्टान्नं वा भोक्तव्यम्। केवलं चिपिटकचर्वणं कुर्वीत गृहजनः।" इदम् एव **आरम्भावस्था** कार्यस्य।

फलसिद्धये यत् किञ्चिद् विशिष्टं प्रयतनं विधीयते तत् **प्रयत्नः**। यदा तान्त्रिकेण प्रचोदितः कपाली "मम जीवनरक्षार्थं मासत्रयमात्रं चिपिटकचर्वणव्रतं पालनीयम्। न केवलं मम तव वा अपि तु मन्थरायाः पङ्गुरामस्य च तथैव भोजनं विधेयम्" इति सर्वेभ्यः परिवारजनेभ्यः निर्देशं प्रयच्छति त्रीन् मासान् चिपिटकचर्वणाय तद् एव **प्रयत्नावस्था** फलस्य।

यदा कार्यसिद्धौ उपायः अपि दृश्यते अपायः अपि दृश्यते तथा च उभयोः तुल्यबलतया फलप्राप्तौ संशयः उत्पद्यते सा अवस्था **प्राप्त्याशा** इति कथ्यते। रङ्गिणी गृहं त्यक्त्वा गच्छति इति कारणेन फलप्राप्तेः अपायः दृश्यते। एवं दशायां यदा रङ्गिण्यै सुवर्णं दित्सुः तान्त्रिकः दशतोलकसुवर्णं घटात् चोरयति तदा उपायः परिदृश्यते। अतः अयम् अंशः **प्राप्त्याशा** कथ्यते। एवम् उपायापायशङ्काभ्यां फलप्राप्तौ शङ्का उपतिष्ठते तस्याम् अवस्थायां तान्त्रिकः कथयति यत्, "अलं परिदेवितेन। पुनर्दीयतां विंशतितोलकं सुवर्णं तेन ते षष्टितोलकसुवर्णलाभो भवेत्।" इति कथनेन प्राप्तिसम्भवः सूच्यते। यतः चिपिटकचर्वणं विना सुवर्णलाभः न सम्भवेत्। अतः सुवर्णलाभसूचनेन तत्कारणीभूतस्य चिपिटकचर्वणस्य अपि सिद्धिः भविष्यति इति सूचितं भवति। एवम् अस्मिन् प्रहसने **प्राप्त्याशावस्था** फलस्य।

यत्र अपायाभावात् फलप्राप्तौ निश्चयः सूच्यते तत् **नियताप्तिः** इति उच्यते। तान्त्रिकः कथयति, "त्वं स्वयं वा त्वदीया भार्या वा नष्टं सुवर्णम् अवश्यं प्राप्स्यति।" एतेन भार्यायाः रङ्गिण्याः प्रसादनेन अपायसम्भावनाया उन्मीलनं सूच्यते इति कृत्वा इयं **नियताप्तिः** अवस्था फलस्य चिपिटकचर्वणरूपस्य।

यदा सम्पूर्णं फलं सिध्यति तदा **फलागमावस्था**। यदा तु रङ्गिणी प्रतिवेशिभिः सुवर्णं प्राप्य चिपिटकचर्वणे श्रद्दधाना चिपिटकचर्वणम् अङ्गीकरोति दासौ च तथा कर्तुम् अङ्गीकुरुतः तदा **फलागमः** सूचितः भवति।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

**सन्धिः सन्ध्यङ्गानि च**

प्रहसने द्वौ सन्धी तयोः च सन्ध्यङ्गानि भवेयुः। अत्र मुखसन्धिः निर्वहणसन्धिः च भवेताम्।

यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा॥
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम्।

[साहित्यदर्पणे–६।७६-७७]

विविधैः रसैः यत्र बीजस्य सूचना क्रियते तत् मुखसन्धिः भवति। अत्र प्रस्तावनायाम् एव मुखसन्धिः वर्तते। तत्र बीजसूचनं कथम् इति सूचितं पूर्वम्।

मुखसन्धौ सूचितं बीजं विविधवृत्तैः विकीर्णं यत्र एकीकृतं भवति तत् निर्वहणसन्धिः इत्युच्यते। अत्र प्रहसने "गुरो! पूर्वम् अज्ञानतः प्रत्याख्यातं चिपिटकचर्वणव्रतं करोमि। जीवय मम पतिम्" इति वाक्येन रङ्गिण्या उच्चारितेन फलं सूच्यते इति तद् एव निर्वहणसन्धिः अत्र।

अथ मुखसन्धेः अङ्गानि विचारयामः। मुखसन्धेः द्वादश अङ्गानि। तथाहि–

उपक्षेपः परिकरः परिन्यासो विलोभनम्॥
युक्तिः प्राप्तिः समाधानं विधानं परिभावना।
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे॥

[साहित्यदर्पणे–६।८१-८२]

**उपक्षेपः** नाम काव्यार्थस्य समुत्पत्तिः। अस्मिन् प्रहसने "कुटुम्बिन्या बलात्कारेण नारिकेलखण्डमिश्रचिपिटकचर्वणं कारितोऽस्मि दारिद्र्यदुःख-प्रशमनार्थम्" इति विदूषकस्य वाक्यम् **उपक्षेपः**।

प्रकृतप्रहसने "कोजागरे चिपिटचर्वणकर्मणा" इत्यादौ श्लोके बहूनि मुखसन्ध्यङ्गानि सूचितानि सन्ति। तानि विचारयामः। समुत्पन्नस्य अर्थस्य बाहुल्यसूचनम् एव **परिकरः**। यथा कोजागरे इत्यादिना श्लोकेन **चिपिटचर्वणकर्मणा धनं लभस्व इति विशिष्टफलोदयसूचनेन** बीजस्य दृढीकरणं क्रियते। **परिन्यासः** समुत्पत्तौ सूचितस्य अर्थस्य दृढतया निश्चयः। अस्य श्लोकस्य आरम्भे "गृहिण्या अनुग्रहात्" इति कथनेन गृहिण्याः रङ्गिण्याः उपक्रमेण एव चिपिटचर्वणं कपालिनः भविता इति सूचनाद् अत्र **परिन्यासः**। फलस्य गुणाख्यानं **विलोभनम्**। अत्र चिपिटचर्वणकर्मणा श्रेष्ठी कपाली धनम् अपि अलभत इति सूचनेन गुणाख्यानं विहितम्। अतः इदं **विलोभनम्**। कर्तव्यस्य सम्प्रधारणं– नाम निश्चयः– एव युक्तिः। अत्र तथा किमपि वचनम् अस्माभिः न परिलक्षितम्। **प्राप्तिः** इत्युक्ते सुखलाभः। बलात् चिपिटकचर्वणं



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



कारितः इति उक्त्वा यदा विदूषकः म्लायति स्म तदा सूत्रधारः "धन्योऽसि त्वं यस्यैवंविधा गृहिणी" इति वचनेन सुखावाप्तिः सम्भाव्यते इति कृत्वा इदं **प्राप्तिः** इति मन्तुं शक्यते। **समाधानं** नाम सूक्ष्मतया सूचितस्य बीजस्य दृढतया प्रतिपादनम्। सम्पूर्णः श्लोकः एव **समाधानरूपं** सन्ध्यङ्गम्। **विधानम्** इत्युक्ते सुखदुःखमिश्रः अर्थः। अत्र "विद्यालवेन रहितः अपि भवेः समृद्धः" इति कथनेन मूर्खत्व-समृद्धत्व-सूचनात् **विधानम्** इति भवति। कुतूहलभूयिष्ठा वाक् **परिभावना**। अत्र तथा कुतूहलसूचकस्य वाक्यस्य अभावात् परिभावना न वर्तते। **उद्भेदः** इत्यस्य बीजार्थस्य प्ररोहः इत्यर्थः। अत्र बीजार्थस्य चिपिटचर्वणरूपकर्मणः मूलभूतस्य गृहिण्यनुग्रहस्य सूचनरूपं वचनम् **उद्भेदः**।

**करणं** नाम प्रकृतार्थसमारम्भः। "तन्नाहम् एतस्य मुखम् अपि द्रष्टुम् अभिलषामि" इति कथनेन कपालिनः समागमनं सूच्यते। तस्माद् इदं वचनं **करणम्**। **भेदः** नाम संहतिभेदनम्। प्रकृते प्रहसने "अहम् अप्यस्य दर्शनपथं परिहरामि" इति सूत्रधारस्य वचनेन विदूषकसूत्रधारयोः मार्गभेदः सूचितः भवति इति कृत्वा इदं **भेद**रूपं सन्ध्यङ्गम्।

अथ निर्वहणसन्धेः अङ्गानि। तानि च चतुर्दश–

सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम्।
कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम्॥
भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च।
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः॥

[साहित्यदर्पणे–६।१०८-१०९]

मुखसन्धौ सूचितस्य बीजस्य निर्वहणे पुनः स्मारणं **सन्धिः** नाम निर्वहणाङ्गम्। प्रकृतप्रहसने "केवलं चिपिटकचर्वणं कुर्वीत गृहजनः" इति वाक्यं **सन्धिः**। कार्यस्य अन्वेषणम् एव **विबोधः** नाम निर्वहणाङ्गम्। अस्मिन् प्रहसने तादृशं वचनं न दृश्यते। कार्यस्य उपक्षेपणम् **उपन्यासः**। "मम जीवनरक्षार्थं मासत्रयमात्रं चिपिटकचर्वणव्रतं पालनीयम्" इति वचनम् **उपन्यासः**। अनुभूतस्य अर्थस्य कथनं निर्णयः। "नाग्निर्नेन्धनम्" इत्यादिना वाक्येन निर्णयः सूचितः भवति। निन्दावचनं **परिभाषणम्**। "जलार्द्रञ्च चिपिटकम्" इत्यादिः श्लोकः एव **परिभाषणम्**। फलसिद्धौ दुःखोपशमः एव **कृतिः**। अत्र तु तान्त्रिकस्य "पश्य सर्वेषां सुबुद्धिरागता" इति वचनं **कृतिः**। शुश्रूषादिकथनं **प्रसादः**। यथा पङ्गुरामेण निद्रितस्य कपालिनः पादयोः पादुकाधारणम्। वाञ्छितसम्प्राप्तिः एव **आनन्दः**। "लब्धं दशतोलकसुवर्णं प्रतिवेशिभिर्दत्तम्" इति **आनन्दः**। दुःखस्य

अपगमः **समयः**। यथा अत्र प्रहसने कपालितान्त्रिकयोः संलापं पश्यामः–

तान्त्रिकः– अलं परिदेवितेन। पुनर्दीयतां विंशतितोलकं सुवर्णं तेन ते षष्टितोलकसुवर्णलाभो भवेत्।

कपाली– गुरो! अपि सत्यम्? पुनरपि नष्टं धनं लप्स्ये?"

अयम् अंशः अत्र **समयः** इति वक्तुं शक्यते। अद्भुतसम्प्राप्तिः **उपगूहनम्**। यथा अत्र "सुवर्णम् अपि द्रवीभूतम्" इति कथनेन अद्भुतरसः व्यज्यते। तथा च प्रतिवेशिभिः अनिरीक्षिततया प्रदत्तं सुवर्णं रङ्गिण्यै। तेन अपि विस्मयः सूच्यते। अतः अयम् अंशः **उपगूहनम्**। सामदानादिकम् एव **भाषणं** नाम निर्वहणाङ्गम्। यथा "अथ किम्! त्वं स्वयं वा त्वदीया भार्या वा नष्टं सुवर्णम् अवश्यं प्राप्स्यसि" इति वाक्यम्। **पूर्ववाक्यं** नाम पूर्वोक्तस्य वाक्यस्य पुनःस्मारणम्। अत्र "तव दासेन पादुकारोपणेन पूजाद्रव्यं सर्वं विनाशितम्। सुवर्णम् अपि द्रवीभूतम्।" इति वाक्येन पूर्वम् उक्त एव अर्थः पुनः स्मारितः इति **पूर्ववाक्यम्** इदम्। "किम् अतः परम् अपि प्रियं करोमि" इति **काव्यसंहारः** भरतवाक्यं च **प्रशस्तिः** इति चतुर्दशसु विबोधातिरिक्तानि सर्वाणि निर्वहणाङ्गानि व्यवस्थितानि।

यद्यपि प्रहसने लास्याङ्गानां प्रयोगः उक्तः अस्ति। किन्तु अस्मिन् प्रहसने दशसु लास्याङ्गेषु स्थितपदम् उत्तमोत्तमकम् इति द्वे एव लास्याङ्गे वर्तेते। यथा मन्थरा-पङ्गुरामयोः दण्डादण्डिकाले क्रोधपरिपूर्णं प्राकृतभाषणं स्थितपदम्। "क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्" इति हि अभिनवगुप्तवचनम्। क्रोधप्रसादयुक्तं रसमयं निन्दावचनम् उत्तमोत्तमकं भवति। यथा अत्र "अयि चूताष्ठिलम्बचिबुके" इति आरभ्य "तद् गम्यताम्" इति यावत् कपालिनः भर्त्सनवचनं, चिपिटकनिन्दनरूपं रङ्गिण्याः उक्तः श्लोकः, "सक्तुं चिपिटकम्" इत्यादिः कपालिप्रयुक्तः श्लोकः चेत्यादयः। यद्यपि अत्र साक्षाद् एव सङ्गीतस्य प्रयोगः न कृतः। तथापि एतादृशानां श्लोकानां रागेण गेयमानत्वेन लास्याङ्गत्वेन प्रयोगः कथञ्चिद् उपपादनीयः।

बहुत्र संस्कृतबहुलः वाग्व्यापारः दृश्यते इति भारतीवृत्तेः प्रयोगः अत्र सुस्पष्टः वर्तते। यद्यपि आरभट्याः वृत्तेः निषेधः प्रहसने कृतः। किन्तु प्रकृते प्रहसने मन्थरा-पङ्गुरामयोः दण्डादण्डिवर्णने **सम्फेटाख्यस्य** आरभटीवृत्तिविशेषस्य तथा भयात् पङ्गुरामस्य पलायने **अवपातनामकस्य** आरभटीविशेषस्य प्रयोगः कविना विहितः दृश्यते। प्रहसनस्य एकाङ्कत्वेन सामान्यतः अर्थोपक्षेपकाणां प्रयोगः अत्र वर्जितः एव भवति। अत्र अपि तथैव दृश्यते।

एतद् विहाय अपि अत्र विविधानि लक्षणानि, नाट्यालङ्कृतयः च यथायथं

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





वर्तन्ते। तानि सुधीभिः यथायथं विचारणीयानि।

रूपकेऽस्मिन् सर्वेषां लास्याङ्गानां प्रयोगः न विद्यते। तस्मात् सम्पूर्णं प्रहसनलक्षणं रूपकेऽस्मिन् न वर्तते चेद् अपि इदं प्रहसनम् एव। यतः प्रहसनलक्षणानाम् अधिकानाम् अत्र समन्वयः भवति एव।

### अर्वाचीननाट्यशास्त्रदृष्ट्या विचारः

अर्वाचीननाट्यसमालोचनदृशा इदं हास्यरसाश्रितं वृत्तं (extravaganza) भवति। प्रहसनस्य आरम्भतः अन्तं यावत् नायकस्य कपालिनः अन्यैः सह सङ्घातेन conflict कथावस्तु परिपुष्टं भवति। सर्वाणि अपि चरित्राणि अत्र सरलचरित्राणि (flat characters) सन्ति। अत्र प्रहसने त्रिविधम् ऐक्यम् अपि वर्तते। यथा कालैक्यं (unity of time), स्थानैक्यं (unity of place), वृत्तैक्यं (unity of action) च। अत्र एकस्मिन् एव काले सर्वं वृत्तं प्रवर्तते इति कृत्वा कालैक्यं वर्तते। कपालिनः गृहे एव सर्वं प्रहसनं प्रवर्तते। अतः स्थानैक्यम् अपि वर्तते। रूपकस्य वृत्तं चिपिटकचर्वणाय एव प्रारब्धं तद् अनुसृत्य एव प्रवर्तते। अतः वृत्तैक्यम् अपि वर्तते।

# विविधचरित्राणां वर्णनम्

## कपाली

प्रकृते प्रहसने चपलस्य कृपणस्य कपालिनः उपहासास्पदं चरित्रं सुललितया गीर्वाणवाण्या चित्रितं वर्तते। अस्य चरितचित्रणं सूत्रधारमुखेन नाट्यकृता प्रस्तावनायां कृतम्–

विद्यालवेन रहितोऽपि भवैः समृद्धः
श्रेष्ठी यथैष चपलः कृपणः कपाली॥ इति।

अयं कपाली एव अस्मिन् प्रहसने नायकः। अस्य **कृपणता** नाट्यकृता प्रहसनस्य प्रतिच्छत्रं निरूपिता। आरम्भे एव खञ्जः भृत्यः पङ्गुरामः कपालिनः जीर्णं पादुकायुगलं कुब्जा दासी मन्थरा च तस्य जीर्णं प्राचीनं छत्रं मार्गे न्यक्षिपताम्। तद् जीर्णं व्यवहारायोग्यं छत्रं कपाली पुत्रपौत्रसुखभोग्यम् इति वर्णयति। पुनश्च यदा शुनकदंशनेन तस्य पादात् रुधिरं स्रवति स्म तदा अयं वैद्यस्य दर्शनीं कः दास्यति इति विचारयन् वैद्यस्य आगमनं निराकर्तुं प्रवृत्तः। नूतनस्य कटस्य आस्तरणेन कटः जीर्यति इति चिन्ता स्वशरीरात् वहतः रक्तस्य अपेक्षया तस्य कृते समधिकपीडाकरी आसीत्। मुखे जीर्णां पादुकाम् आदाय धावन्तं कुक्कुरम् अनुधाव्य तं कक्कुरं प्रहृत्य कपाली पादुकाम् उद्धृत्य आनयत्। शुनकदष्टः अपि स जीर्णच्छत्रं शीर्णं पादुकायुगलं च नष्टम् इति कारणेन अदुःख्यत्, न पुनः शुनकदंशनजनितपीडया।

पल्लीवासिनः कपालिनः कृपणतां तथा तस्य भार्यायाः रङ्गिण्याः दुरवस्थां च जानन्ति स्म। तस्मात् पल्लीवासिनं तान्त्रिकं प्रतिवेशिनः अन्वरुन्धन् यथा स तान्त्रिकः कपालिनः धनम् आहृत्य रङ्गिण्यै प्रयच्छेत्। तान्त्रिकः अपि तस्य कार्पण्यस्य मात्रां ज्ञात्वा तं जाले पातयितुं मासत्रयव्याप्तं चिपिटकचर्वणं प्रस्तुतवान्। तेन स तान्त्रिकम् आदर्तुम् आरभत।

स न केवलं कृपणः अपि च स **लोभी**। स त्रिगुणिते सुवर्णे लुब्धः सुवर्णं दातुं सिद्धः अभवत्।

अयम् अतीव **कोपनः** अपि। यदा रङ्गिणी तस्य प्रभूतसम्पदः कथां घोषयति तदा स तस्याः कण्ठरोधं करिष्यामि इति कथयन् रङ्गिणीं प्रति अधावत्। एतेन तस्य **भयशीलता** अपि ज्ञायते। खञ्जं पङ्गुरामं कुब्जां मन्थराम् अपि स ताडयितुं प्रवृत्तः आसीत्। जीर्णच्छत्रेण शुनकं तथा प्रहृतवान् सः। तत् छत्रम् अपि भग्नम्।



वैद्येन सह वार्तायां तस्य क्रोधः प्रकटितः।

सः अतीव **सन्देहप्रवणः**। जीर्णच्छत्रस्य क्षेपणे दासीं रङ्गिणी एव प्ररोचयति इति स सन्दिग्धे। वैद्यः विषविकारनाशाय यदा क्षतस्य दाहरूपं निदानम् अवदत् तस्मिन् समये अपि स वैद्यस्य दुरभिसन्धिम् अन्विष्टवान्। चिकित्सायै आगतं तान्त्रिकम् अपि स आरम्भे एव प्रवञ्चकं मतवान्।

अयं **कटुवचनः**। सर्वान् अपि अयं कटुभिः एव वचनैः सम्बोधयति। दासीं प्रति काकविष्ठा, गर्भदासी इत्यादिशब्दानां प्रयोगः स्वभार्यायै च चूताष्ठिलम्बचिबुके इत्यादीनां शब्दानां प्रयोगः तस्य **असभ्यतां** द्योतयति।

**परपीडकः** चायं कपाली। परपीडने अस्य दाक्ष्यं रङ्गिण्या निगदितम्– 'चतुर्मुखोऽसि कलहे ताडने च चतुर्भुजः' इति। पत्न्याः कण्ठं रोद्धुम् अयं प्रवृत्तः। भृत्यौ अपि अस्य ताडनेन भीतौ। तस्य ताडनभयाद् एव पल्लीजनानां द्वारे द्वारे बम्भ्रम्यते स्म पङ्गुरामः। एतैः कपालिनः **परपीडकत्वं** स्पष्टं प्रतिभाति।

कपाली **चपलः**। चपलत्वं चास्य प्रतिच्छत्रं दरीदृश्यते। दासाभ्यां छिन्नपादुकायुगले छिन्नच्छत्रे च पथि निक्षिप्ते कपाली उद्बन्धनेन मरिष्यामि इति भाययन् रङ्गिणीं रज्जुम् अयाचत। रङ्गिण्या रज्ज्वां दीयमानायां च तां सः अभर्त्सयत्।

सः **वञ्चकः** अपि। वैद्यं दक्षिणादानं विना एव गृहात् निष्कासयितुं स निपुणं नटितवान्। एतेन तस्य **नटनपटुता** अपि ज्ञायते। स वचने अपि चतुरः। तान्त्रिकेण सह वार्तालापे तस्य **वाक्चातुर्यम्** अपि प्रकटितं भवति।

**मोहः** अपि कपालिनः चरित्रे स्पष्टरूपेण परिलक्ष्यते। 'प्राणेषु नादरो यस्य मोहश्छिन्नपरिच्छदे' इति तान्त्रिकवचनं, 'मम पुत्रपौत्रसुखभोग्यं छत्रमिदं पथि निक्षिपसि निर्दयम्' इत्यादिवचनानि अस्य मोहपरकत्वे प्रामणरूपेण उपस्थापयितुं शक्यन्ते।

एतेषु गुणदोषेषु कपालिनः अपरः कश्चन महान् गुणः **आत्मसम्मानबोधः**। वस्तुतः अन्येषां पुरतः अपरः तस्य अपमानं कुर्यात् इति स कथम् अपि न सहते। अतः प्रतिवेशिनः सकाशात् पादुकाम् आनीतवति पङ्गुरामे कुपितः सः अकथयत्, 'गृहमध्ये यथैवाहं करवाणि नाम, बहिर्मम कलङ्कम् उद्घोषयसि' इति। एवम् एव नूतनकटास्तरणाय रङ्गिण्यां कुपितः स वैद्यस्य आगमनवार्तां श्रुत्वा नूतनकटस्य आस्तरणे न पुनः असहमतिं प्रादर्शयत्।

एवं समासेन वक्तुं शक्यते यत् कृपणः, कोपनः, कटुवाक्प्रयोक्ता, लोभी, मुग्धः, परपीडकः, वञ्चनाशीलः, वाक्पटुः, नटनकुशलः च कपाली नाट्यकृता

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

चित्रितः। अस्य चरितं नाट्यशास्त्रोक्तान् नायकगुणान् न अनुकरोति। अपि च प्रतिनायकगुणाः एव अत्र वर्तन्ते। तथाहि–

लुब्धो धीरोद्धतः स्तब्धः पापकृद् व्यसनी रिपुः।
(दशरूपके २/९)

वस्तुतः निन्दितानां कविकल्पितं चरितम् आश्रित्य प्रहसनं रचनीयम् इति निर्देशम् अनुसृत्य प्रहसननायके ईदृशाः प्रतिनायकगुणाः निन्द्याः एव वर्तेरन् इति सिद्धम् एव। अतः एतादृशानां दोषाणाम् आकरभूतं कपालिनं चित्रितवान् कविः। एवं च तस्य तान् दोषान् एव आश्रित्य सम्पूर्णं प्रहसनं प्रवर्तते इति महत् कौशलं नाट्यकारस्य।

## रङ्गिणी

प्रकृतप्रहसनस्य नायकस्य कपालिनः भार्या रङ्गिणी। किन्तु तस्याः नायिकात्वेन निरूपणं कष्टाय इति अस्माभिः पूर्वं विचारितम्। इयम् अत्र प्रहसने पताकानायकत्वेन विवेचयितुं शक्यते। सा आरम्भतः एव कपालिना सह वर्तते। परोक्षतः सा प्रहसनस्य फलोदये कपालिनः साहाय्यम् आचरति।

एषा रङ्गिणी कपालिनः योग्या भार्या। सा **पत्युः स्वभावं सम्यग् जानाति**। कपाली यदा उद्बन्धनाय रज्जुं याचते तदा सा सत्यम् एव रज्जुं पुरतः निक्षिपति। यतः सा जानाति यत् कपाली वाक्शूरः। यद् वा वदतु नाम, स्वस्य अनिष्टं कर्तुं कथम् अपि स न समर्थः।

**पतिव्रता** सा। पतिं सारमेयेण दष्टं दृष्ट्वा सा विचलिता भवति। झटिति मन्थरां वैद्यस्य आनयनाय प्रैषयत् सा। चिकित्सायै लोहशलाकां सङ्ग्रहीतुं गता यदा सा विफलमनोरथा प्रतिनिवर्तते तदा वैद्यम् अदृष्ट्वा सा तान्त्रिकम् आह्वयत् पत्युः चिकित्सार्थम्। अन्ते अपि सा जीवय मम पतिम् इति तान्त्रिकम् अन्वरुणत्। पत्युः जीवनरक्षायै चिपिटकचर्वणे अपि मतिमती जाता। वैद्येन सह तस्याः वार्तालापेन तस्याः पातिव्रत्यं स्फुटं प्रकाशते।

सा न **मृदुभाषिणी** अपि च सा **प्रगल्भा**। यदा तु कपाली तस्याः रज्जुनिक्षेपं निन्दति तदा सा स्वपक्षं समर्थयन्ती गुरुजनाज्ञालङ्घने तस्याः मतिः नास्ति इति अवदत्। एतेन तस्याः **परिहासप्रियता** अपि ज्ञायते। पत्या तस्याः विषये ये आक्षेपाः कृताः सा निरन्तरं तेषाम् आक्षेपाणाम् उत्तरं प्रयच्छति। अत

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





**प्रतिवादपरायणा** अपि सा। सर्वम् अपि पत्युः अत्याचारं सा तूष्णीं न सहते।

सा **देवद्विजशास्त्रेषु भक्तिमती**। यदा कपाली तस्यां दास्याः प्रश्रयदानरूपम् आक्षेपं करोति तदा सा कथयति यद् नष्टचन्द्रदर्शनाद् एव तस्याम् इत्थं कलङ्कारोपः जातः इति। वैद्ये आगते सा अवगुण्ठनेन शिरः आवृणोति। तान्त्रिके आगते तं सा गुरो इति आह्वयति।

सा **प्रगल्भा** किन्तु **न व्यवहारकुशला**। अतः तान्त्रिकः यदा शर्करया क्षतं शोधयति तदा सा विस्मिता भवति। दासी मन्थरा कथयति यत् शर्करया क्षतशोधनं सा अपि जनन्याः ज्ञातवती। एवं प्रसिद्धं विषयम् अपि अजानत्याः तस्याः मुग्धता व्यवहाराकुशलता च स्फुटा भवति।

सा **स्वादुभोजनम् ईप्सति।**। चिपिटकस्य स्वादहीनतां निपुणं वर्णयन्त्याः तस्याः भोजनरुचिप्रियता ज्ञायते। तस्याः **आत्मसम्मानप्रियता** अपि द्रष्टव्या। यदा कपाली तस्याः न बिभेति इति कथयित्वा तान्त्रिकं तस्याः उपेक्षार्थं प्रचोदयति तदा सा गृहं त्यक्त्वा गच्छति। एतेन तस्याः **आत्मसम्मानप्रियता प्रतिवादपरायणता** च स्फुटं प्रतीयते।

पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः।
तस्यैवानुचरो भक्तः किञ्चिदूनश्च तद्गुणैः॥ इति।
(दशरूपके २/८)

इत्थं धनञ्जयेन पताकानायकस्य लक्षणम् उक्तम्। अत्र कपालिनः यथा चरितं तस्याम् अपि तादृशाः केचन गुणाः दृश्यन्ते एव। सा अपि वाक्चतुरा, आत्मसम्मानप्रिया, व्यवहाराकुशला। कपाली अपि शर्करया क्षतशोधनं ज्ञात्वा तत् प्रयोक्तुं विस्मरति इति तस्य व्यवहाराकुशलता ज्ञायते। रङ्गिणी विचक्षणा अपि। अतः पत्युः चिकित्सायै यतते। पतिः यदा भृत्यं ताडयितुं प्रवर्तते तदा मुखे अङ्गुलिम् अर्पयित्वा ततः अपसर्पति। सा कपालिनः सहायार्थं यतते। कपालिनि तस्याः भक्तिः अपि स्फुटा। एवं रङ्गिण्यां पताकानायकस्य लक्षणानि सङ्गच्छन्ते।

## तान्त्रिकः

तान्त्रिकस्य चरितम् अपि अत्र पताकानायकत्वेन अङ्कितम्।

तान्त्रिकः प्रवञ्चकत्वेन प्रतीयमानः अपि वस्तुतः न वञ्चकः। वस्तुतः स व्यवहारे अतीव **कुशलः**। स आगत्य एव दीर्घकालं यावत् क्षरन्तीं रुधिरधारां शर्कराप्रयोगेण शीघ्रम् एव अरुणत्।

स बुद्धिमान्, प्रत्युत्पन्नमतिः, वाक्चतुरः, सहनशीलः, क्रियाकर्मसु कुशलः, लोभहीनः, परोपकारी च।

स कपालिनः चरितं सम्यग् विचार्य एव कपालिनः गृहं प्रविष्टः। यदा कपाली तं प्रवञ्चकं प्रतिपादयितुं यतते स्म तदा स झटिति एव कपालिनः चरितम् उद्घाटयन् विचित्रान् श्लोकान् विरचय्य तस्य उपायं व्यर्थीकृतवान्। यदा तेषां श्लोकानाम् आकरम् अपृच्छत् कपाली, तदा अपि सद्योजातसंहिता इति श्लिष्टेन शब्देन तस्य समुचितम् उत्तरं प्रादात् सः। एतेन तस्य बुद्धिमत्ता प्रत्युत्पन्नमतिता च स्फुटं भवति। झटिति एव स कपालिनः धनापहरणाय उपायं रचयित्वा अतीव कौशलेन तम् उपायं सार्थकम् अकरोत्। तस्य वाक्चातुर्यम् अपि विशिष्टम्। तस्य वाक्चातुर्येण एव कपाली पराभूतः भवति।

यदा कपाली तं प्रवञ्चकं कथयति तदा स कुपितः न भूत्वा सहनशीलतां प्रदर्शयति। स यदि अभिलषति तर्हि कपालिनं वञ्चयित्वा किञ्चिद् धनं स्वस्य कृते अपि अपहर्तुं समर्थः भवति। किन्तु स तथा नैव आचरति। स निर्लोभः जनः। तस्य सर्वः अपि प्रयत्नः वस्तुतः रङ्गिण्यै किञ्चिद् धनं प्रदातुम् एव। तत् कर्तुं स कपालिनः दुर्वचनानि अपि असहत। कर्मकाण्डे अपि तस्य महत् कौशलम् अस्ति इति तस्य क्रियाकलापेन प्रतिभाति।

इत्थं तान्त्रिकः कथायाः फलसाधने विशिष्टं यत्नं करोति। नाट्यकारः कुशलतया तस्य चरितं रचितवान्।



## समाजचित्रणम्

'लोकानुकीर्तनं काव्यम्' इति आलङ्कारिकमूर्धन्यैः राधावल्लभत्रिपाठिभिः अभिनवकाव्यालङ्कारसूत्रे उक्तम्। लोकस्य अनुकीर्तनं लोकानुकीर्तनम् इति व्युत्पत्त्या काव्यं लोकानुसारि इति प्रतिपाद्यते। तेन समाजः यथा प्रवर्तते काव्यम् अपि तथैव अनुवर्तते। अस्मिन् लक्षणे काव्यपदस्य समग्रेऽपि साहित्ये व्यपदेशः। आधुनिकसंस्कृतसाहित्ये वर्तमानकालिके समाजे घटमानानि नैकानि वृत्तानि दृग्गोचरीभवन्ति इत्यत्र नास्ति संशयलेशोऽपि।

समाजे मूल्यबोधस्य नग्नचित्रं श्रीजीवन्यायतीर्थस्य प्रायः सर्वेष्वेव रूपकेषु उपवर्णितम्। प्रकृतं प्रहसनं 'चिपिटकचर्वणं' मुख्यतः शुद्धहास्याय प्रवर्तितम्। अत्र खण्डशः समाजस्य चित्रम् अपि परिदृश्यते।

समाजे अकर्मण्यानां पुरुषाणां वागाडम्बरप्रियता प्रहसने प्रकटिता वर्तते। विदूषकः कथयति, "मादृशं पुरुषसिंहं चौरम् इवाथवा पाचकम् इव का संयन्तुं पारयति?" इति। तदा सूत्रधारः गेहेशूरस्य तस्य चरितं जानन् तं कथयति, "तर्हि किं घासलुब्धो रासभ इव भोजनरुद्धः स्थितोऽसि?" इतः स्वस्य परिचयः उद्घाटितः भवति इति ज्ञात्वा विदूषकः झटिति स्वीकरोति यत्, "सत्यं भणसि। कुटुम्बिन्या बलात्कारेण नारिकेलखण्डमिश्रचिपिटकचर्वणं कारितोऽस्मि दारिद्र्यदुःखप्रशमनार्थम्।" एतेन विदूषकः बहिः यथा वा नटतु नाम, गृहे स भार्यायाः आधीन्यम् अङ्गीकृत्य एव वसति इति स्फुटम् एव प्रतिपद्यते।

कपाली गृहजनानां पीडने रतः अस्ति इति ज्ञात्वा पल्लीवासिनः सर्वे तस्य गृहजनेषु स्नेहशीलाः सन्ति। अतः प्रतिवेशिनः एव तस्य भार्यायै किञ्चिद् धनं प्रदातव्यम् इति तान्त्रिकम् अयोजयन्। पङ्गुरामाय ग्रामस्य प्रतिद्वारं बम्भ्रम्यमाणाय पल्लीवासी एव कश्चन भद्रमुखः पादुकां प्रदाय उपकरोति। एतेन ग्रामे कपालिनः प्रतिवेशिनाम् उदारचरितता तथा संवेदनशीलता स्फुटं प्रतिपादितं नाट्यकारेण।

ऋषिप्रोक्ते शास्त्रे सामाजिकानां श्रद्धा वरीवर्तते इति नाट्यकारः सम्यक् प्रतिपादयति। कोजागरे चिपिटकचर्वणस्य प्रथा, नष्टचन्द्रदर्शनपरिहारप्रथा, तान्त्रिकस्य विषये पल्लीवासिनां तथा रङ्गिण्याः श्रद्धा स्फुटा एव। यदा तान्त्रिकः असद्भूताम् अपि सद्योजातसंहिताम् उदाहरति तदा तत्र निःसंशयं विश्वसिति रङ्गिणी।

ग्रामे वैद्यस्य विषये जनानां श्रद्धा आदरः च अत्र प्रकटितः। यतः शुनकदष्टं कपालिनं ज्ञात्वा वैद्यस्य आह्वानाय एव रङ्गिणी अयतत।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.

स्मर्तव्यं यत् नवदशशतकस्य अन्तिमे दशके लब्धजन्मा नाट्यकारः विंशशतकस्य उत्तरभागे ईदृशीषु रचनासु प्रवृत्तः। अयं कालः युगसन्धिकालः। सुदीर्घकालं यावत् पाश्चात्त्यशिक्षायाः प्रभावेण क्रमेण लोके प्राचीनपरम्परासु अश्रद्धा वर्धमाना दृश्यते स्म। सुदीर्घकालिकं बाह्यम् आक्रमणं सहमानः हिन्दुसमाजः बह्वीभिः कुप्रथाभिः पीडितः अपि आसीत्। एतस्याम् अवस्थायाम् समाजे प्राचीनप्रथासु जनानां श्रद्धा अल्पमात्रया अवशिष्यते चेद् अपि शास्त्रादिविषये जनानाम् अज्ञानम् अपि दयनीयम् आसीत्। अत एव अतीव सरलतया सद्योजातसंहितायाः नाम उक्त्वा विचित्रान् श्लोकान् च उक्त्वा कपालिनं वञ्चयितुम् अशकत् तान्त्रिकः। पुनः क्वचिद् अपि शास्त्रादिषु अश्रूयमाणस्य स्वर्णत्रैगुण्यकर्मणः, मासत्रयव्यापिनः चिपिटकचर्वणस्य कथनम् अपि अतीव हास्यास्पदम् अस्ति। घटस्थापने पञ्चरत्नदानस्य तात्पर्यादिकम् अनवगच्छन् कपाली वस्तुतः सम्पूर्णस्य समाजस्य मुखम्। रङ्गिणी अपि ईदृशेषु कर्मसु श्रद्दधाना वस्तुतः इदम् एव तत्त्वं द्रढयति।

कपालिना रङ्गिण्याः मन्थरायाः पङ्गुरामस्य ताडनेन अत्र स्त्रीषु दासेषु च अत्याचारस्य चित्रम् एव नाट्यकारः अङ्कयितुम् इयेष इति यद्यपि प्रतिपादयन्ति केचन, किन्तु वयम् अत्र न सम्मतिं प्रदर्शयामः। यतः प्रहसने नायकः निन्दितः जनः भवति। अतः कविः कपालिनः चरितं निन्दितम् इति स्वीकृत्य एव तादृशान् व्यवहारान् तस्य चरिते आरोपयत्। पुनश्च तस्य ईदृशम् आचरणं समाजः अपि न प्रशंसते। यथा च पूर्वं प्रतिपादितं समाजस्य भद्रजनाः प्रतिवेशिनः पङ्गुरामस्य रङ्गिण्याः च साहाय्यार्थम् एव यतन्ते। अतः समाजे ईदृशस्य आचरणस्य निन्दितत्वम् एव कविना प्रतिपादितम्। आरम्भे सूत्रधारः तु कपालिनः निन्दाम् अकार्षीद् एव। अपि च विदूषकः स्वयं गेहेशूरः अपि कपालिनं निन्दन् कपालिसदृशस्य चरितस्य समाजे अनादरम् एव सोसूच्यते कविः।

कविः स्वलेखन्या समाजम् एव चित्रयति। अत्र एकाङ्कप्रहसने समाजस्य एकस्य खण्डस्य अल्पं चित्रं कविः अङ्कितवान्। शास्त्रादीनां यथायथम् अध्ययनेन एव समाजे व्याप्तानां पाषण्डानां निराकरणं शक्यम् इति वार्ताम् अपि सूक्ष्मतया सूचयति कविः।



ॐ नमश्चण्डिकायै

# चिपिटकचर्वणम्

(प्रहसनम्)

महामहोपाध्यायादिनानाबिरुदभाग्भिः
**श्रीश्रीजीवन्यायतीर्थैः**
विरचितम्

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

# पात्राणि

१. सूत्रधारः
२. विदूषकः
३. कपाली– कृपणः विप्रः। प्रहसनस्य नायकः।
४. पङ्गुरामः– कपालिनः खञ्जः भृत्यः।
५. वैद्यः– शुनकेन दष्टस्य कपालिनः चिकित्सार्थं समागतः चिकित्सकः।
६. तान्त्रिकः– कपालिनं वञ्चयित्वा ततः अपहृतं सुवर्णं कपालिभार्यायै दानाय समागतः तान्त्रिकः।

७. रङ्गिणी– कपालिनः भार्या।
८. मन्थरा– कपालिनः कुब्जा भृत्या।

# चिपिटकचर्वणम्

चूताष्ठितुल्यचिपिटायितगण्डदेशा
चण्डक्रियारुचिरखण्डितहास्यलेशा।
कुप्यत्कपालिनयनानलसामिधेनी
पुष्णातु वो गणवधूः क्षणधूतवेणिः॥

**(नान्द्यन्ते)**

**सूत्रधारः।** एते वयं वार्षिके पर्वणि सर्वजनहर्षजनकं किमप्यपूर्वं प्रहसनं प्रयोक्तुकामाः स्मः। तद् यावद् विदूषकम् आहूय प्रयोगम् इमं निर्वाहयितुं§ सहायीकरोमि§। भो वयस्य! सत्वरम् इतस्तावद्[१] एहि।

**(नेपथ्ये)**

**विदूषकः।** वाबूडोऽहं न पारेमि गच्छिदुं। [व्यापृतोऽहं[२] न पारयामि गन्तुम्।]

**सूत्रधारः।** भो वयस्य! व्यापृतस्त्वं[३] कस्मिन् कर्मणि?

**(नेपथ्ये)**

**विदूषकः।** अज्ज क्खु कोआगरपव्वदिवसी। कुडुम्बिनी मं ण परिच्चअदि। [अद्य खलु कोजागरपर्वदिवसः कुटुम्बिनी मां न परत्यजति।]

**सूत्रधारः।** किं बन्धने रन्धने वा रक्षितोऽसि[४]?

**(प्रविश्य)**

**विदूषकः।** मारिसं पुरुसरिखं चोरं विअ आदु पाचअं विओ का संजमिदुं पारेदि? एसोम्हि आअदो। [मादृशं§ पुरुषसिंहं§ चौरम् इवाथवा पाचकम् इव का संयन्तुं§ पारयति? एषोऽस्म्यागतः[५]।]

[१] इतः+तावद्
[२] व्यापृतः+अहम्
[३] व्यापृतः§+त्वम्
[४] रक्षितः+असि
[५] एषः+अस्मि+आगतः

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

**सूत्रधारः।** तर्हि किं घासलुब्धो§ रासभ इव[६] भोजनरुद्धः स्थितोऽसि?

**विदूषकः।** ही ही भोः। सच्चं भणासि। कुडुम्बिणीए बलक्कारेण नारिएलखण्डमिस्सटिविणअचव्वणं कारिदोऽम्हि दारिद्दुक्खप्पसमणत्थं। [ही ही भोः। सत्यं भणसि। कुटुम्बिन्या बलात्कारेण नारिकेलखण्डमिश्रचिपिटकचर्वणं§ कारितोऽस्मि[७] दारिद्र्यदुःखप्रशमनार्थम्§।]

**सूत्रधारः।** धन्योऽसि त्वं यस्यैवंविधा[८] गृहिणी गृहे विराजते। या वयस्यं चिपिटकचर्वणं बलात् कारयित्वा छलात् तन्नामकं किमपि प्रहसनं माम् अपि स्मारयति। यत् किल वङ्गीयेनाचार्यपञ्चाननतर्करत्नतनूजन्मना[९] श्रीश्रीजीवन्याय-तीर्थशर्मणा विनिर्माय सद्यः प्रयोगायास्मभ्यम्[१०] अर्पितम्। वयस्य! दुर्लभस्त्वादृशो भाग्यवान्[११]। यत् ते गृहिण्या अनुग्रहात्–

कोजागरे चिपिटचर्वणकर्मणा त्वं
पर्वप्रभाववशतो वसुपर्वतः स्याः।
विद्यालवेन रहितोऽपि भवेः समृद्धः
श्रेष्ठी यथैष चपलः कृपणः कपाली॥

**विदूषकः।** भाव! वरं दरिद्दो ण उम किवणो, ता णाहं एदस्स मुहं वि दंसिदुंअहिलसामि। [भाव! वरं दरिद्रो न पुनः कृपणः, तन्नाहम्[१२] एतस्य मुखम् अपि द्रष्टुम्§ अभिलषामि§।]

**सूत्रधारः।** धिक् कृपणम्। अहम् अप्यस्य दर्शनपथं परिहरामि।

**निष्क्रान्तौ**

**इति प्रस्तावना**

[६]घासलुब्धः+रासभः+इव
[७]कारितः अस्मि
[८]यस्य+एवंविधा§
[९]वङ्गीयेन+आचार्य...
[१०]प्रयोगाय+अस्मभ्यम्
[११]दुर्लभः§+त्वादृशः§+भाग्यवान्§
[१२]तद्+न+अहम्



## प्रथमोऽङ्कः

**(ततः प्रविशति छिन्नं छत्रम् एकं करे धृत्वा कपाली।)**

**कपाली।** अहम् उद्बन्धनेन प्राणांस्त्यक्ष्यामि[१३], न शक्ष्यामि गृहेऽस्मिन्नवस्थातुम्[१४]। मम महामूल्यं§ छत्रम् इदं पथि विनिक्षिप्तम्§! दैवान्न[१५] केनापि चोरितम्, अथवा चिरायान्तर्हितम्[१६] इदम् अभविष्यत्§। नूनं दुष्टायाः दास्या दुर्व्यवसितम्§ एतत्!
मन्ये गृहिण्या अपि वर्तते सङ्केतः कथम् अन्यथा दास्या एतादृशं साहसं स्यात्।

पितामहस्मृतिपूतं
निधिभूतञ्च मम तातपादानाम्।
छिद्रशतभूषितम् इदं
दूषितम् इव पथि परित्यक्तम्॥

अये! सर्वनाशिनि! गृहिणि! दीयताम्§ एका रज्जुः, नाहं जीवितं धारयितुम्§ इच्छामि।

**(प्रविश्य)**

**रङ्गिणी।** भो बुद्धिबृहस्पते§। (रज्जुं पुरतः प्रक्षिप्य) गृह्यताम् इयं रज्जुः। एकस्य च्छिन्नच्छत्रस्य कृते मरणं वरयसे चेत्, सुखं निःशङ्कं§ निरातङ्कं म्रियस्व।

**कपाली।** भोः सीतासावित्रीदमयन्तीप्रतिमे§! पत्युरुद्बन्धनाय[१७] निर्लज्जम्§ उपहरसि रज्जुम्। न जानासि मयि मरणम् उपगते का ते दशा भविष्यतीति[१८]।

[१३]प्राणान्+त्यक्ष्यामि
[१४]गृहे+अस्मिन्+अवस्थातुम्§
[१५]दैवाद्+न
[१६]चिराय+अन्तर्हितम्§
[१७]पत्युः+उद्बन्धनाय
[१८]भविष्यति+इति

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

**रङ्गिणी।** जानामि विधवा स्याम् इति। सधवापि[१९] किम् अधुना स्वर्गे वसामि, विधवा भूत्वा किं वा पातालं यास्यामि? मां याचसे रज्जुं, गुरुजनाज्ञालङ्घनपातकपरिहाराय§ रज्जुं ते पुरतो रक्षामि[२०]।

**कपाली।** अहो धर्मज्ञानं प्रखरं ते!

**रङ्गिणी।** नमोऽस्तु पतिदेवाय ब्रह्मविष्णुस्वरूपिणे।
चतुर्मुखोऽसि कलहे ताडने च चतुर्भुज॥

**(इति गललग्रीकृतवासाः§ प्रणमति।)**

**कपाली।** तिष्ठतु प्रणतिः। प्रवहति भक्तिगङ्गा तव मां निश्चिहं निमज्जयितुम्। किन्तु विफलेयं[२१] समीहा। नाहं[२२] विस्मरामि तवैव[२३] स्पर्धया वर्धमाना कुब्जपृष्ठा धृष्टा दासी ममेदं[२४] छत्रं पथि निक्षिप्तवती।

**रङ्गिणी।** किं नाम मम स्पर्धयेति[२५]? यदैव[२६] दैववशाद् भाद्रे मासि नष्टचन्द्रदर्शनं मे सङ्घटितं तदैवाशङ्कितोऽयं[२७] मिथ्याकलङ्कारोपः। अयि भोः! कीटकूटाकुलितं§ शतच्छिद्रम्§ इदं पुरातनं छत्रं यदि ते प्राणाधिकं प्रियं स्यात् तर्हि कथं न तद्रक्षितं लौहमञ्जूषायां यत्र ते वर्तते शततोलक-सुवर्णरजतहीरकादिरत्नजातम्?

**कपाली।** अरे सर्वस्वनाशिनि! पतिद्वेषिणि! वाचं संयच्छ, नोचेत्तव कण्ठरोधं करिष्यामि।

[१९] सधवा+अपि
[२०] पुरतः+रक्षामि
[२१] विफला+इयम्
[२२] न+अहं
[२३] तव+एव
[२४] मम+इदम्
[२५] स्पर्धया+इति
[२६] यदा+एव
[२७] तदा+एव+आशङ्कितः+अयम्



**(इति हस्तमुद्रां प्रदर्श्य रङ्गिणीं प्रति धावति। ततः प्रविशतः कुब्जा मन्थरा, खञ्जः पङ्गुरामश्च परस्परं यष्ट्याघातं[२८] नाटयन्तौ।)**

**मन्थरा।** भद्दमुहा! पेक्खद पेक्खद पहरदि मे एसो दुट्ठो दुव्विनीदो दुराआरो खञ्जछो। [भद्रमुखाः§! पश्यत पश्यत प्रहरति माम् एष दुष्टो दुर्विनीतो दुराचारः खञ्जः!]

**पङ्गुरामः।** अज्जा! ण परिहरामि। केअलं दण्डकट्ठेण ईदिसं करोमि (इति दण्डम् अग्रे प्रसारयति।) अज्जा! ण एसा प्पभुणो कम्म करेदि– निद्दासुहेण समअं अदिवाहेदित्ति जाव भणामि दाव मं दण्डकट्ठेण अक्कमिदुं पउट्टा। अहं पि अत्तणो रक्खणत्थं दण्डं धारमि ण मारेमि। [आर्याः! न प्रहरामि। केवलं दण्डकाष्ठेनेदृशं[२९] करोमि। (इति दण्डम् अग्रे प्रसारयति।) आर्याः! नैषा प्रभोः कर्म करोति, निद्रासुखेन समयम् अतिवाहयतीति यावद् भणामि तावन्मां[३०] दण्डकाष्ठेनाक्रमितुं[३१] प्रवृत्ता। अहम् अपि आत्मनो रक्षार्थं दण्डं धारयामि, न मारयामि।]

**मन्थरा।** मह कम्म तुमं करेसि रे खञ्जअ! [मम कर्म त्वं करोषि रे खञ्ज!]

**(इति यष्ट्या ताडयितुम् उपक्रमते।)**

**पङ्गुरामः।** अहमपि मारेमि– खुज्जपिट्ठं दे सरलं विधास्सं। [अहमपि मारयामि– कुब्जपृष्ठं ते सरलं विधास्यामि।]

**मन्थरा।** अहंपि अवरं पादं तुह खञ्जं करिस्सं। [अहम् अपि अपरं पादं तव खञ्जं करिष्यामि।]

**(इत्यन्योन्यं[३२] ताडनं नाटयतः। कपाली यावद् उपसर्पति तावद् यष्टिं निक्षिप्य भृत्य आत्मानं गोपायति)**

[२८] यष्टि+आघातम्
[२९] दण्डकाष्ठेन+ईदृशं
[३०] तावत्+मां
[३१] दण्डकाष्ठेन+आक्रमितुं
[३२] इति+अन्यः+अन्यं

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.

**कपाली।** आः पापे! युवां कलहं कुर्वन्तौ मम सर्वनाशं कल्पयथः। अरे दुष्टे मन्थरे!

**रङ्गिणी।** कथय कथय यथा ममैव[३३] स्पर्द्धया दासौ कलहायेते इति।

**कपाली।** तूष्णीम्भव। अरे दुष्टे पापिष्ठे काकविष्ठे[३४] दासि।

**मन्थरा।** (युक्तपाणिः) देअ! किं मं आआरेसि? [देव! किं माम् आकारयसि§?]

**(रङ्गिणी मुखेऽङ्गुलिम् अर्पयित्वा शनैर्निष्क्रान्ता।)**

**कपाली।** किं वधिरासि? अरे गर्भदासि[३५]!
आतपवर्षात्राणं हर्षाय यच्छरणम् आपन्नानाम्।
कर्तितबालद्रुमवत् पथि तत् पातितम् अहो स्पर्धा॥
मम पुत्रपौत्रसुखभोग्यं छत्रमिदं निक्षिपसि निर्दयम्?

**मन्थरा।** (नासाकर्णं स्पृष्ट्वा) ईदिसं अकज्जं पुणो णाहं करिस्सं ता मरिसेदु मं महाभाओ। सच्चं कधेमि पङ्गुरामेण तुह जिण्णं षादुआजुअलं णिक्खित्तंति पेक्खिअ मए वि जिण्णं छत्तअं परिञ्चत्तम्। [ईदृशम् अकार्यं पुनर्नाहं[३६] करिष्यामि, तन्मर्षयतु[३७] मां महाभागः। सत्यं कथयामि पङ्गुरामेण तव जीर्णं पादुकायुगलं निक्षिप्तम् इति दृष्ट्वा मयापि जीर्णं छत्रं परित्यक्तम्!]

**कपाली।** किं नाम मम पुरातनं पादुकायुगलं भृत्येन दूरीकृतम्? अरे मम दुर्भाग्यदुर्ग्रह§! दासापसद§! कथं क्व तावत् पादुकाद्वयं निक्षिप्तवान् असि?

**(प्रविश्य)**

[३३] मम+एव

[३४] काकस्य विष्ठा (षष्ठीतत्पुरुषः)। काकविष्ठा इत्यस्य सम्बोधने एकवचनम्। विष्ठा इत्यस्य मलम्/पुरीषम् इति अर्थः। यथा काकस्य विष्ठा जघन्या, जुगुप्सातकरी, दुर्गन्धमयी, अक्रियाकरी च भवति तथा एव त्वम् असि इति अस्य पदस्य तात्पर्यम्।

[३५] गर्भे दासी गर्भदासी। या गर्भस्थिता एव दास्यवृत्तिम् आरब्धवती तादृशी।

[३६] पुनः+न+अहम्

[३७] तत्+मर्षयतु§

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



**पङ्गुरामः।** कर्त्ता अलिअं कधेदि दासी। तहाविहस्स कुकज्जस्स कारओ ण भोदि दे चदुरी सादी। [कर्तः! अलीकं कथयति दासी। तथाविधस्य कुकार्यस्य कारको न भवति ते चतुरो दासः।]

**(एकः कुक्कुरः पादुकामुखो धावन् निष्क्रान्तः।)**

**मन्थरा।** कत्ता! पेक्ख पेख्ख अअ कुक्कुरः पाउआमुहो धाअदि। [कर्तः पश्य पश्य! अयं कुक्कुरः पादुकामुखो धावति[३८]।]

**कपाली।** हुम्! दृष्टो मया कुक्कुरः। यावत् पादुकाम् आच्छेत्तुम्§ एनम् अनुधावामि§।

**(छत्रं कक्षे निधाय धावन् निष्क्रान्तः।)**

**मन्थरा।** अरे धुत्तअ! मिच्छाकधनं न सहइ देओचि। धम्मकुक्कुरख्वं धरन्तो देवी झत्ति आअदो। [अरे धूर्त! मिथ्याकथनं न सहते देवोऽपि[३९]। धर्मकुक्कुररूपं धारयन् देवो झटित्यागतः[४०]।]

**पङ्गुरामः।** चिट्ठ! अहम्पि पेक्खामि तुह एक्कं दिनं आदु मह एक्कं दिनं। [तिष्ठ, अहम् अपि पश्यामि तवैकं[४१] दिनम् उत ममैकं[४२] दिनम्।]

**मन्थरा।** तुमं किं मे करिस्ससि (इत्यङ्गुष्ठं[४३] दर्शयति।) [त्वं किं मे करिष्यसि।]

**(नेपथ्ये कुक्कुरशब्दः)**

**पङ्गुरामः।** तक्केमि कत्ता कुक्कुरं पहारिअ पादुअं आच्छिन्दिअ गेह्णदि। जीवं अअं पच्चापट्टि दाव पलाइस्सं (निष्क्रान्तः) [तर्कयामि कर्ता कुक्कुरं प्रहृत्य पादुकाम् आच्छिद्य गृह्णाति; यावद् अयं प्रत्यावर्तते तावत् पलायिष्ये।]

[३८] पादुकामुखः§+धावति

[३९] देवः+अपि

[४०] झटिति+आगतः

[४१] तव+एकं

[४२] मम+एकं

[४३] इति+अङ्गुष्ठं

**मन्थरा।** अज्ज क्खु पहारेण पङ्गुरामस्य पिट्ठचर्म उप्पाडिदं हुविस्सदि। जाव पेक्खामि पादुआ लद्धा ण वेत्ति। [अद्य खलु प्रहारेण पङ्गुरामस्य पृष्ठचर्मोत्पाटितं[४४] भविष्यति। यावत् प्रेक्षे पादुका लब्धा न वेति।]

**रङ्गिणी।** (प्रविश्य) अहो दुर्दैवम्[४५]। कार्पण्यदोषाद् बुद्धिविकारो जातः। अन्यथा कुक्कुरमुखात् पादुकाग्रहणाय धावति वा कश्चिद् अपि सुस्थः§ पुरुषः? कस्य पाादुका शुना नीयते को जानाति? कर्ता कुक्कुरेण दष्टः सन् गृहे प्रत्यावर्तते। क्षरति§ रुधिरधारा पाददेशात्। अरे मन्थरे त्वम् अत्र निश्चिन्ता§ तिष्ठसि! सत्वरं गच्छ, वैद्यम् आह्वय।

**मन्थरा।** हद्धी! हद्धी! जं आण्णवेदि भट्टिणी। (निष्क्रान्ता।) [हा धिक् हा धिक्! यद् आज्ञापयति भर्त्री।]

**(ततः प्रविशति कुक्कुरदष्टः स्रवद्रुधिरः कपाली।)**

**कपाली।** हा कष्टम्। कुक्कुरेण दष्टोऽस्मि[४६]। छत्रेण प्रहरतो मे[४७] छत्रम् अपि भग्नम्§। पादुकाम् अपि भक्ष्यमाणां§ बलाद् आच्छिन्दन् सारमेयेणाक्रान्तः[४८] पलायमानः पदे दष्टोऽस्मि। न मे दंशने व्यथा; तच्छत्रं[४९] भग्नं पादुकाद्वयं गतम् इत्यवसीदामि[५०]। हा धिक्।

**रङ्गिणी।** अहो रक्तधारा। हा विधे! (एकं कटं विस्तीर्य) त्वम् अत्र शयानो§ विश्रामं[५१] कुरु। वैद्यम् आनेतुं मन्थरा मया प्रेषिता।

[४४]पृष्ठचर्म+उत्पाटितम्
[४५]दुर्+दैवम्
[४६]दष्टः+अस्मि
[४७]प्रहरतः+मे
[४८]सारमेयेण+आक्रान्तः
[४९]तत्+छत्रं
[५०]इति+अवसीदामि§
[५१]शयानः+विश्रामं



**कपाली।** आ हताशे। नवोऽयं[५२] कटः कथं भूमौ पातितो, न मलिनो भविष्यति? आनय पुरातनं कटम्। कथं वा वैद्य आहूतः[५३]? दर्शनीं को दास्यति?

**रङ्गिणी।** आः किं प्रलपसि? कटेऽस्मिन्[५४] कुरु शयनम्। पुरातने छिन्नकटे शायितं त्वां दृष्ट्वा वैद्यः किं कथयिष्यति? चिकित्सार्थं दातव्या दक्षिणेति कथं व्ययाद् उद्विजसे§? जीवनं तु रक्षणीयम्।

**कपाली।** हा हा! यदा रज्जुं पुरतो निधाय मरणाय माम् उपदिष्टवत्यसि[५५] तदा कथं नोद्बन्धनेन[५६] प्राणा न[५७] परित्यक्ताः?

**रङ्गिणी।** आः! तूष्णीं तिष्ठ। वैद्यः समागच्छति।

**(ततः प्रविशति मन्थरया दर्शितमार्गो वैद्यः)**

**वैद्यः।** क्व तावद् गृहस्वामी? अयम् अहम् अस्मि वैद्यः।

**रङ्गिणी।** (किञ्चिद् अवगुण्ठनं नाटयित्वा) आगच्छतु भवान्। अत्रैव वर्तते रोगी।

**वैद्यः।** भोः श्रेष्ठिन्! कस्ते रोगः?

**कपाली।** (मुखं विकृतं कृत्वा) कस्ते रोगः? न दृश्यते रुधिरधारा क्षरन्ती?

**रङ्गिणी।** कुक्कुरेण दष्टो मे पतिः।

**वैद्यः।** कीदृशेन कुक्कुरेण? कथं कदा वा दष्टः?

**रङ्गिणी।** नास्माकं[५८] परिचितेन। नापि[५९] वा घटिकायन्त्रं दृष्टं मया।

[५२]नवः+अयं
[५३]वैद्यः+आहूतः
[५४]कटे+अस्मिन्
[५५]उपदिष्टवती+असि
[५६]न+उद्बन्धनेन
[५७]प्राणाः+न
[५८]न+अस्माकं
[५९]न+अपि

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

**वैद्यः।** तर्हि कुक्कुरदंशनम् इति कथं ज्ञातम्? नाडीं दर्शय श्रेष्ठिन्! (हस्तनाडीं परीक्ष्य) नाडी न समीचीना। लक्षणं प्रतिकूलं प्रतिभाति। प्रहृतेन तेन कुक्कुरेण क्रुद्धेनाक्रम्य[६०] दष्ट इत्युच्यताम्[६१]।

**रङ्गिणी।** चिकित्सक! सत्यं निरूपयसि। कथं मे पतिर्न[६२] किञ्चिद् वदति?

**वैद्यः।** मन्ये क्षीवेण शुना दष्टस्य विकार आसन्न इति।

**रङ्गिणी।** हा दुर्विधे! भो महोदय! तर्हि चिकित्साविधिः कीदृशः स्यात्?

**वैद्यः।** इदानीम् एवायं[६३] गव्यघृतम् उष्णदुग्धेन सह पाययितव्यः।

**कपाली।** (मुखं विकृतं कृत्वा स्वगतम्) गव्यघृतम्? मम प्रपितामहो गव्यघृतम्[६४] एकपादं प्रतिदिनं पिबति स्म। महामूर्खोऽयं[६५] यद् आधुनिकं वनस्पतिघृतम् अवज्ञाय दुर्मूल्यं दुष्प्रापं नाममात्रपरिचितं गोघृतं व्यवस्थापयति।

अद्भुतं द्रव्यमुद्भूतं वनस्पतिघृताभिधम्।
न घोषो गौर्न[६६] वा घासो गोरसोऽपि[६७] न युज्यते॥

**रङ्गिणी।** वैद्यवर! पश्य पश्य पत्युर्मेऽधरस्पन्दनम्[६८], नास्य[६९] वाक् प्रसरति।

[६०]क्रुद्धेन+आक्रम्य§
[६१]दष्टः+इति+उच्यताम्
[६२]पतिः+न
[६३]एव+अयम्
[६४]प्रपितामहः+गव्यघृतम्
[६५]महामूर्खः+अयम्
[६६]गौः+न+वा
[६७]गोरसः+अपि
[६८]पत्युः+मे+अधरस्पन्दनम्
[६९]न+अस्य



**वैद्यः।** उपचीयते§ विकारलक्षणम्। तर्हि सद्य एव[७०] सम्यगुत्तप्तलोहशलाकया§ क्षतस्थानदाहो विधेयः[७१]।

**कपाली।** (स्वगतम्) अहो चातुरी। अल्पं क्षतं वर्धयित्वा चिकित्सां करिष्यति वैद्यः।

श्वदन्तक्षतम् अत्यल्पम् इत्यतः कल्पते स्वयम्।
लौहतापजदाहेन मद्देहे विपुलं क्षतम्॥

तद्व्याजेन मे धनलुण्ठनं भवेत्।

**रङ्गिणी।** पुनरपि लक्ष्यताम्§ ओष्ठस्पन्दनम्§।

**वैद्यः।** गृहकर्त्रि! शृणु यदि मम चिकित्सा न कृता भवेत् तदा जलातङ्करोगेणाक्रान्तः[७२] कुक्कुरवत् बुक्करवं कृत्वा समीपवर्तिनः सर्वान् एव दङ्क्ष्यति रोगी। तान् अपि पुनरुन्मत्तान्[७३] विधाय स्वयं मरिष्यति। गृहजनाश्च[७४] पश्चान्मरिष्यन्ति[७५]।

**रङ्गिणी।** किं किं कथयति वैद्यराज! कुक्कुरवद् रवं कृत्वा सर्वे वयं मरिष्यामः। अतीव भीतास्मि[७६] सत्वरम् आनयामि लोहशलाकाम्। करोतु भवान् अपि समुचितां चिकित्साम्।

**वैद्यः।** श्रूयतां§- को दास्यति मुद्राचतुष्टयं मे दक्षिणाम्?

**रङ्गिणी।** यदि सुचिकित्साबलेन पतिर्मे[७७] पुनश्चैतन्यं[७८] लभेत, तर्हि स एव दास्यति ते दक्षिणाम्, अन्यथा पितृगृहाल्लब्धम्[७९]

[७०]सद्यः+एव
[७१]क्षतस्थानदाहः§+विधेयः§
[७२]जलातङ्करोगेण+आक्रान्तः
[७३]पुनः+उन्मत्तान्
[७४]गृहजनाः+च
[७५]पश्चात्+मरिष्यन्ति
[७६]भीता+अस्मि
[७७]पतिः+मे
[७८]पुनः+चैतन्यम्
[७९]पितृगृहात्+लब्धम्

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.

आभरणं विक्रीयापि[८०] भवदीयम् ऋणम् अहं विनेष्ये।

**वैद्यः।** साधु सुगृहिणि साधु। सम्प्रत्यग्निज्वालनार्थम्[८१] आनीयताम्§ एकं कुण्डं किञ्चित् काष्ठञ्च[८२]। केचन पुरुषाश्चाहूयन्तां[८३] रोगिणो हस्तपादविधारणाय[८४]।

**रङ्गिणी।** यद् आदिशति भिषक्प्रवरः§। (निष्क्रान्ता)

**कपाली।** (स्वगतम्) नेयं मे गृहिणी, साक्षाद् यमदूतिका। तप्तलोहदाहेन मे मरणं कामयते§। भवतु यथाप्राप्तम्§ आचरामि।

**(हस्तपादादिविकारं§ नाटयति।)**

**वैद्यः।** अहो विकारचिह्नं परिस्फुरति। किञ्चिद् दूरं तिष्ठामि। (इत्यपसर्पति[८५]) कः कोऽत्र[८६] भोः?

**मन्थरा।** वैद्यवर! आज्ञापयतु को नियोग इति[८७]।

**वैद्यः।** सत्वरम् आहूयन्तां प्रतिवेशिनस्तरुणाः[८८]। गृहस्वामिनो विकारावस्था[८९] समापन्ना§।

**मन्थरा।** अहो सर्वनाशः! कुत्र गमिष्यामि? (निष्क्रान्ता)

**(कपाली कुक्कुरशब्दं कृत्वा वैद्यं नखदन्तेनाक्रमितुं[९०] चेष्टते§।)**

**वैद्यः।** अहो विपत्तिः। किं स्वप्राणान् परिहरामि? तिष्ठतु दक्षिणा। (धावन् निष्क्रान्तः।)

[८०]विक्रीय+अपि
[८१]सम्प्रति+अग्निज्वालनार्थम्
[८२]काष्ठं+च
[८३]पुरुषाः+च+आहूयन्ताम्
[८४]रोगिणः+हस्तपादविधारणाय§
[८५]इति+अपसर्पति
[८६]कः+अत्र
[८७]कः+नियोगः+इति
[८८]प्रतिवेशिनः+तरुणाः
[८९]गृहस्वामिनः+विकारावस्था
[९०]नखदन्तेन§+आक्रमितुम्§



**कपाली।** अहो आपद् गता। निश्चिन्तोऽस्मि[९१] साम्प्रतम्। तथा हृदयं मे विदीर्यते– छत्रं तथा पादुकायुगलं मे विनष्टं चिराय!

**रङ्गिणी।** (प्रविश्य) लौहशलाका न लब्धा। लब्धा पुनरेका[९२] वण्टनी। (अग्रतो दृष्ट्वा) क्व तावद् वैद्यो गतः?

**कपाली।** (परावृत्य) महत्तरम् औषधम् आनेतु गृहं प्रति प्रस्थितः।

**रङ्गिणी।** कदा पुनरागमिष्यति[९३]?

**कपाली।** यदा तस्यौषधसङ्ग्रहो भविष्यति[९४]।

**रङ्गिणी।** कापि[९५] दक्षिणा तस्मै दत्ता?

**कपाली।** बाढम्। पर्याप्ता दत्ता, अन्यथा स कथम् अपि स्थानत्यागं नाकरिष्यत्[९६]।

**रङ्गिणी।** यद्यागमने[९७] विलम्बः स्यात् तदा कुक्कुरविषं सर्वाङ्गेषु विस्तृतं भवेत्, किं करोमि? प्रतिवेशिनां मुखाद् अवगतं यद् एकस्तान्त्रिकः[९८] पल्लीम् इमाम् अलङ्करोतीति। स च बहुविधरोगाणां प्रतिहर्ता। तं तावद् आह्वयामि। (निष्क्रान्ता)

**कपाली।** अहो स्त्रीबुद्धिः। किमतः परं मे कर्तव्यं स्यात्?

**(ततः प्रविशति पङ्गुरामः पादुकाचतुष्टयं धारयन्।)**

**पङ्गुरामः।** कत्ता कुविदोऽपि, गेण्ह एदं पाउआचउट्ठअं। पाउआजुअलं जहिं निक्खित्तं तहिं एव्व टिण्दं। तुमं उण दासीओ वअणेअ कुक्कुरस्स पच्छा पच्छा धावन्तोऽसि सन्तोसि। गेण्ह तं जुअलं अण्णं अ गेण्ह। किं तुट्ठोऽसि कत्ता?

[९१]निश्चिन्तः+अस्मि
[९२]पुनः+एका
[९३]पुनः+आगमिष्यति
[९४]तस्य+औषधसङ्ग्रहः§+भविष्यति
[९५]का+अपि
[९६]न+अकरिष्यत्§
[९७]यदि+आगमने
[९८]एकः+तान्त्रिकः

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

[कर्तः कुपितोऽसि[९९], गृहाणैतत्[१००] पादुकाचतुष्टयम्। पादुकायुगलं यत्र निक्षिप्तं तत्रैव स्थितम्§। त्वं पुनर्दास्या वचनेन कुक्कुरस्य पश्चात् पश्चात् धावन्नसि[१०१], श्रान्तोऽसि[१०२]। गृहाण तद् युगलम् अन्यच्च गृहाण। किं तुष्टोऽसि[१०३] कर्तः।]

**कपाली।** अरे दुर्वृत्त! कुत एते[१०४] अपरे पादुके लब्धे?

**पङ्गुरामः।** पल्लीअणाणं दुआरे दुआरे वभम्ममाणो अहं रोअणं कादुं पउट्टो। मह रोअणं पेक्खिअ तुह हत्थे मह निक्कहं अ आशंकिअ दआवसेण भद्दमुहेण केणवि णिअघरदो जिण्णं पादुआजुअलं मे दिण्णं। [पल्लीजनानां द्वारे द्वारे बम्भ्रम्यमाणोऽहं[१०५] रोदनं कर्तुं प्रवृत्तः। मम रोदनं प्रेक्ष्य§ तव हस्ते मम निग्रहञ्चाशङ्क्य[१०६] दयावशेन भद्रमुखेन केनापि निजगृहाज्जीर्णं[१०७] पादुकायुगलं मे दत्तम्।]

**कपाली।** ननु प्रतिवेशिना कृतः पादुकाप्रहारो मयि[१०८] इत्युच्यताम्[१०९]। गृहमध्ये यथैवाहं[११०] करवाणि§ नाम, बहिर्मम[१११] कलङ्कम् उद्घोषयसि!

[९९] कुपितः§+असि
[१००] गृहाण+एतत्
[१०१] धावन्+असि
[१०२] श्रान्तः+असि
[१०३] तुष्टः§+असि
[१०४] कुतः+एते
[१०५] बम्भ्रम्यमाणः§+अहं
[१०६] निग्रहं§+च+आशङ्क्य§
[१०७] निजगृहात्§+जीर्णम्§
[१०८] पादुकाप्रहारः+मयि
[१०९] इति+उच्यताम्
[११०] यथा+एव+अहम्
[१११] बहिः+मम



**पङ्गुरामः।** कत्ता! कुक्कुरमुहादो अद्धभुत्तं पाउअं सव्वसमक्खं बलक्कारेण गेण्हिदुं गदस्स तुह ण भोदि कलंको? [कर्तः! कुक्कुरमुखाद् अर्धभुक्तां पादुकां सर्वसमक्षं बलात्कारेण ग्रहीतुं गतस्य तव न भवति कलङ्कः?]

**कपाली।** यावन्मुखं[११२] तावद्वचनम्[११३]। (वेत्रं गृहीत्वा) दास्याः पुत्र! पादुकाभिक्षुक! पाषण्ड! त्वामद्य सशरीरं यमसदनं प्रेषयामि।

**पङ्गुरामः।** कहि सि मादा शिग्घं रक्खं मं। पाउआतंकरोओ जादो भट्टुणो।
[कुत्रासि मातः, शीघ्रं रक्ष माम्। पादुकातङ्करोगो जातो गृहस्वामिनः।] (इति खञ्जगत्या धावन्निष्क्रान्तः)

**कपाली।** इदानीम् अपि रक्तधारा न शाम्यति। स्वयं किं वा करोमि?

**(इति पुनः कटे शेते। प्रविशति तान्त्रिको रङ्गिणी च।)**

**तान्त्रिकः।** (स्वगतम्) अनुरुद्धोऽहं[११४] प्रतिवेशिभिर्यद्[११५] इमं महाकृपणं श्रेष्ठिनं वञ्चयित्वा तदीयभार्यायै§ दीयतां कियांश्चिद् अर्थ इति[११६]। ततश्च[११७] कृततान्त्रिकपकटवेष एषोऽहं[११८] कौशलेन प्रथमं तन्मनः[११९] कर्दमवन्मर्दयन्[१२०] निष्कासयामि सलिलवत् किञ्चिद् धनम्।

**रङ्गिणी।** गुरो पश्य पाददेशाद् अधुनापि रुधिरं क्षरति।

[११२] यावत्+मुखं
[११३] तावत्+वचनम्
[११४] अनुरुद्धः§+अहम्
[११५] प्रतिवेशिभिः+यत्
[११६] कियान्+चित्+अर्थः+इति
[११७] ततः+च
[११८] कृततान्त्रिककपटवेषः§+एषः+अहम्
[११९] तत्+मनः
[१२०] कर्दमवत्+मर्दयन्

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

अनिष्टभयाज्जलम्[१२१] अपि न दत्तं नाप्यौषधं[१२२] किमपि। कुक्कुरदंशनाद् विषं यथा सर्वाङ्गप्रसृतं न स्यात् तथा विधीयताम्।

**कपाली।** कस्त्वं[१२३] भोः?

**तान्त्रिकः।** तन्त्रमन्त्रविद् अस्मि।

**कपाली।** मन्त्रेण किं कर्तुं शक्यते?

**तान्त्रिकः।** डाकिनीशाकिनीभूतपिशाचग्रहावेशविषविकारप्रशमनं§ मे मन्त्रायत्तम्। पश्य सद्य एव शोणितधारां निवारयामि। भद्रे! आनीयतां स्वल्पमात्रा§ सुचूर्णिता§ शर्करा। तां मन्त्रपूतां विधाय निवेशयिष्यामि क्षतस्थाने। फलञ्च[१२४] सद्य एव[१२५] प्रत्यक्षीकरिष्यसि।

**(रङ्गिणी निष्क्रान्ता पुनः प्रविश्य शर्कराम् आनीय ददाति। तान्त्रिकोऽस्फुटस्वरेण 'शर्करे कुरु कुरु रक्तरोधं शमय शमय क्षतम्' इति मन्त्रं पठन्, उपरि च्छोटिकाबन्धनं नाटयन्, फूत्कारेण शोधयन्, क्षतस्थाने लेपयति।)**

**रङ्गिणी।** (सविस्मयम्) आश्चर्यम्! आश्चर्यम्! सद्य एव रक्तरोधो जातः[१२६]! (कृताञ्जलिः) गुरो विषदोषं नाशयाधुना[१२७]।

**मन्थरा।** (प्रविश्य) शक्करा रत्तारोहं करेदित्ति मादुणो मएवि आकण्णिदं। [शर्करा रक्तरोधं करोतीति[१२८] मातुर्मयाप्याकर्णितम्[१२९]।]

**तान्त्रिकः।** आ मूढे! कथं मन्त्रगुणं न घोषयसि? तूष्णीम् उपविश।

---

[१२१]अनिष्टभयात्+जलम्

[१२२]न+अपि+औषधम्

[१२३]कः+त्वम्

[१२४]फलं+च

[१२५]सद्यः+एव

[१२६]रक्तरोधः§+जातः

[१२७]नाशय§+अधुना

[१२८]करोति+इति

[१२९]मातुः+मया+अपि+आकर्णितम्§

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.



**मन्थरा।** जं भवं आणवेदि। [यथा भवान् आज्ञापयति।]

**कपाली।** अरे वञ्चक! शर्करया क्षतं शोधयसि§– बोधयसि§ पुनर्मन्त्रगुणम्[१३०]।

**तान्त्रिकः।** (स्वगतम्) दुर्वचनम् इदानीं सोढव्यम्। (प्रकाशम्) रोगविशेषे विनापि[१३१] द्रव्योपयोगं मन्त्रेणैव[१३२] सिद्धिम् आपादयितुं शक्यते। भोः श्रेष्ठिन् कथय कस्ते रोगः?

**कपाली।** डाकिनीग्रस्तोऽस्मीति[१३३] दुर्दमोऽयं[१३४] रोगः।

**तान्त्रिकः।** सत्यञ्चेत्[१३५] ताम् उच्चाटयितुं शक्तोऽस्मि[१३६] मन्त्रयोगेन। मया पुनः श्रुतं यत् कुक्कुरविषविकारार्तोऽसीति[१३७]।

**कपाली।** विषविकारस्तु[१३८] भवत्यनुमेयः[१३९]। डाकिनी तु प्रत्यक्षा।

**रङ्गिणी।** मरणकालेऽपि[१४०] न रसिकतां§ मुञ्चति§ पुरुषसिंहः। गुरोः प्रश्नानाम् उत्तरं देहि।

**तान्त्रिकः।** साधूक्तं[१४१] श्रीमत्या। भो यजमान! कथय विषविकारम् अनुभवसि न वा?

**कपाली।** गृहजनानां सर्वेषाम् एव मस्तिष्कविकारो जातो न पुनर्मे स्वल्पोऽपि[१४२]।

---

[१३०]पुनः+मन्त्रगुणम्

[१३१]विना+अपि

[१३२]मन्त्रेण+एव

[१३३]डाकिनीग्रस्तः+अस्मि+इति

[१३४]दुर्दमः§+अयम्

[१३५]सत्यं+चेत्

[१३६]शक्तः+अस्मि

[१३७]कुक्कुरविषविकारार्तः+असि+इति

[१३८]विषविकारः+तु

[१३९]भवति+अनुमेयः§

[१४०]मरणकाले+अपि

[१४१]साधु+उक्तम्

[१४२]स्वल्पः+अपि

**तान्त्रिकः।** इयं बुद्धिरेव[१४३] विकारं सूचयति।
**कपाली।** कथं तथा निश्चयः क्रियते?
**तान्त्रिकः।** शास्त्रसंवादेन। श्रूयताम्–

आत्मानं मन्यते स्वस्थम् अन्यान् सर्वान् विकारिणः।
श्वमुखात् पादुकाग्राही विकारग्रस्त उच्यते[१४४]॥

**कपाली।** अप्रमाणम् इदं शास्त्रम्। कुतः प्राप्तम् इदं वचनम्?
**तान्त्रिकः।** सद्योजात-संहिताख्य-प्रामाणिकशास्त्रात्।
**कपाली।** सा संहिता केन कृता?
**तान्त्रिकः।** सद्योजातः शिव उच्यते इति न श्रुतं त्वया?
**कपाली।** एवं चेद् वचनान्तरम् उल्लिख्यताम्।
**तान्त्रिकः।**

प्राणेषु नादरो यस्य मोहश्छिन्नपरिच्छदे।
कुब्जखञ्जौ परिजनौ सविकारः स उच्यते॥

**कपाली।** (स्वगतम्) अहो! सर्वं मदीयचरितम् उद्घाट्यते। नास्ति पुनः प्रश्नस्यावकाशः[१४५]। (प्रकाशम्) भवतु, मन्त्रकरणे का तव दक्षिणा?
**तान्त्रिकः।** हरीतकीफलम् एकम्।
**कपाली।** विषविकारप्रशमनार्थं§ क्रियमाणे शान्तिकर्मणि हरीतकीफलम् एकं ते दक्षिणा भवेत्? हरीतकीफलद्वयम् अहं ते दास्यामि।
**तान्त्रिकः।** (कर्णौ स्पृष्ट्वा) अलं मां प्रलोभ्य। फलम् एकम् एव मे दक्षिणा। अधिकग्रहणे मन्त्रापराधः स्यात्। पुनश्च श्रूयताम्– अनुष्ठानं मासत्रयं यावद् भविता। शान्तिकाले गृहजनानां केनापि नान्नं न गोधूमचूर्णं न दुग्धं न घृतं न फलं मिष्टान्नं वा भोक्तव्यम्। केवलं चिपिटकचर्वणं कुर्वीत गृहजनः।
**कपाली।** (स्वगतम्) मन्ये विचक्षणोऽयं[१४६] तान्त्रिकः।

---

[१४३]बुद्धिः+एव
[१४४]विकारग्रस्तः+उच्यते
[१४५]प्रश्नस्य+अवकाशः
[१४६]विचक्षणः+अयम्

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



मम व्ययह्रासकरोऽसौ[१४७] प्रस्तावः सर्वथाभिनन्दनीयः[१४८]। (प्रकाशम्) किं तत्र शाकं स्यात्?
**तान्त्रिकः।**

तिन्तिडीगुडयोगो वा[१४९] मरीचं वा क्वचिद् भवेत्।
लवणं तैलबिन्दुर्वा[१५०] कचुः सिद्धा क्वचित् क्वचित्॥

**कपाली।** (स्वगतम्) अहो ममान्तरात्मना[१५१] सह सम्मन्त्र्येव[१५२] व्यवस्थापयति तान्त्रिकः। एतेन गृहिण्या दास्या दासस्य च तुल्यं शासनं भविता। (प्रकाशम्) गृहिणि! श्रूयतां तान्त्रिकस्य वचनम्। मम जीवनरक्षार्थं मासत्रयमात्रं चिपिटकचर्वणव्रतं पालनीयम्। न केवलं मम तव वा अपि तु मन्थरायाः पङ्गुरामस्य च तथैव[१५३] भोजनं विधेयम्। अहो चिपिटकमहिमा!

सक्तुं चिपिटकं चैव
विरिञ्चिस्तुलया[१५४] दधत्।
न निर्णेतुं क्षमोऽद्यापि[१५५]
कस्मिन् पक्षे जयो भवेत्[१५६]॥

नाग्निर्नेन्धनं[१५७] न पाकपात्रं न पाचको न कालात्ययः§। आपणात् क्रयात् परम् एव भोज्यता सक्तुचिपिटकयोः समाना।

---

[१४७]व्ययह्रासकरः+असौ
[१४८]सर्वथा+अभिनन्दनीयः
[१४९]तिन्तिडीगुडयोगः+वा
[१५०]तैलबिन्दुः+वा
[१५१]मम+अन्तरात्मना
[१५२]सम्मन्त्र्य+इव
[१५३]तथा+एव
[१५४]विरिञ्चिः+तुलया
[१५५]क्षमः+अद्य+अपि
[१५६]जयः+भवेत्
[१५७]न+अग्निः+न+इन्धनं

**रङ्गिणी।** धिक् तान्त्रिकम्। (सवेणीकं शिरश्चालयन्ती[१५८]) नाहं शक्नोमि व्रतम् इदं पालयितुम्। यस्य रोगः स एव चिपिटकव्रतपरो भवतु।

जलार्द्रञ्च चिपिटकं पङ्कवद् विरसायते।
शुष्कं कृन्तति वक्त्रौष्ठरसनं काष्ठचूर्णवत्॥

**कपाली।** तर्हि विधवा भव। गुरो! क्रियताम् अनुष्ठानं न तावन्नारीतर्जनगर्जनाभ्यां[१५९] भीतोऽस्मि[१६०]।

**रङ्गिणी।** न भीतश्चेत् तिष्ठ। अहं भिक्षयापि चिपिटकमुष्टिम् उपार्जयितुं प्रभवामि (निष्क्रान्ता)।

**कपाली।** अयि चूताष्ठिलम्बचिवुके!

कुक्कुरीव ललज्जिह्वा भोजनार्थं दिवानिशम्।
गृहे गृहे भ्रमन्ती त्वं वर्धय स्वामिगौरवम्॥

तद् गम्यताम्।

**तान्त्रिकः।** भोः श्रेष्ठिन्! प्रारभ्यमाणेऽस्मिन् स्वस्त्ययनकर्मणि किञ्चिद् अन्यद् अपि मङ्गलं सम्भाव्यते। श्रूयतां प्रथमत एव स्थापनीये घटे पञ्चरत्नदानम् आवश्यकम्। पञ्चरत्नमध्ये सुर्वणस्य गणना वर्तते। यदि दशतोलोकपरिमितं सुवर्णं तत्र निक्षेप्तुं शक्नोषि, तर्हि शान्तिकर्मावसाने तस्य त्रिगुणवृद्धिः सम्भाव्यते। यदि विंशतितोलकं सुवर्णं ददासि तदा षष्टितोलकं प्राप्स्यसि। युगपत् तव शरीरस्य विषनाशः सम्पद्विशेषाधिगमश्च[१६१] सम्भाव्यते।

**कपाली।** (स्वगतम्) इदानीम् अस्य दुरभिसन्धिः प्रकटितप्रायः। (प्रकाशम्) तत्र कः प्रत्ययः? यदि सुवर्णवृद्धिर्न[१६२] स्यात् तदा…

[१५८]शिरः+चालयन्ती
[१५९]तावत्+नारीतर्जनगर्जनाभ्यां
[१६०]भीतः+अस्मि
[१६१]सम्पद्विशेषाधिगमः§+च
[१६२]सुवर्णवृद्धि+न

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



**तान्त्रिकः।** तदा तवैव गृहे स्थितस्य घटस्य मध्ये यथावत् सुवर्णं स्थास्यति। केवलं घटे यथा दासस्य दास्या वा स्पर्शो न स्यात् तथा सावधानताश्रयणीया[१६३]। इदानीं प्रत्ययो दीयते[१६४]– ननु श्रुतं त्वया श्रेष्ठिनो महाधनिकस्य[१६५] प्रेमसुन्दरस्य नाम, मानकुमारस्य वा? उभावेव[१६६] सहसा धनसम्पदा वृद्धिम् आपन्नाविति[१६७] सर्व एव[१६८] जानन्ति।

**कपाली।** कस्यचिन्महापुरुषस्यानुग्रहात्[१६९] तयोः सम्पद्वृद्धिर्जातेति[१७०] श्रुतम्।

**तान्त्रिकः।** स एवायं[१७१] महापुरुषः। (इत्यङ्गुल्या[१७२] स्वं निर्दिशति।) भाग्यात् कुक्कुरदंशनं भाग्यान्ममागमनम्[१७३]। अचिन्त्या किल दैवगतिः।

**कपाली।** भो महोदय! प्रथमम् एकतोलकसुवर्णेन परीक्षा प्रदर्श्यताम्।

**तान्त्रिकः।** तत्र शास्त्रीया बाधा वर्त्तते। शून्ययुतोऽङ्क एव[१७४] ग्रहणीयः§।

अङ्कः शून्ययुतो ग्राह्यः[१७५] स्वर्णत्रैगुण्यकर्मणि।

[१६३]सावधानता+आश्रयणीया
[१६४]प्रत्ययः+दीयते
[१६५]श्रेष्ठिनः+महाधनिकस्य§
[१६६]उभौ+एव
[१६७]आपन्नौ+इति
[१६८]सर्वे+एव
[१६९]कस्यचित्+महापुरुषस्य+अनुग्रहात्
[१७०]सम्पद्वृद्धिः+जाता+इति
[१७१]सः+एव+अयम्
[१७२]इति+अङ्गुल्या
[१७३]भाग्यात्+मम+आगमनम्
[१७४]शून्ययुतः+अङ्कः+एव
[१७५]शून्ययुतः+ग्राह्यः

शून्यहीनो यदा ह्यङ्कः[१७६] शङ्क्यः सर्वलयस्तदा[१७७]॥

**कपाली।** (स्वगतम्) किं करोमि– लोभो मां[१७८] प्रवर्तयति। दशतोलकसुवर्णस्य त्रिंशत्तोलके परिणामः। विना श्रमं विना क्लेशम्। भवतु। 'न संशयम् अनारुह्य नरो भद्राणि पश्यति'। (प्रकाशम्) गुरो! स्वीक्रियते दशतोलकस्वर्णदानम्। घटादिस्थापनं क्रियताम्। (निष्क्रान्तः)

**तान्त्रिकः।** धन्योऽसि[१७९]।

**(आसनं विस्तीर्य§, सम्मुखे घटं स्थापयति सिन्दूरादिकञ्च[१८०] लेपयति।)**

**कपाली।** (प्रविश्य) गुरो! गृहाण दशतोलकं सुवर्णम्। यथा मासद्वयमध्ये त्रिगुणं स्यात् तथा कार्यम्। अतः परं विंशतितोलकं दास्यामि।

**तान्त्रिकः।** सर्वथा भवतु कल्याणम्। अहम् अपि घटस्थापनं करोमि। (घण्टां वादयन्) देहि सुवर्णम्।

**(कपाली कम्पितहस्तो दशतोलकसुवर्णं[१८१] प्रयच्छति। तान्त्रिकः घटमध्ये स्थापयन् वस्त्रेण च्छादयति[१८२], मन्त्रं च पठति)**

**तान्त्रिकः।** घट त्वं धर्मरूपोऽसि जनभाग्यप्रदायकः।
स्थिरो भव स्थिरो भव स्थां स्थां स्थीं स्थीं स्थिरो भव॥
(ध्यानमुद्रां प्रदर्शयन्) (स्वगतम्) इदानीं किञ्चिद् अहिफेनशर्करादिमिश्रं निद्रायोगचूर्णं घटोदकेन सह श्रेष्ठिनं पाययामि। (उत्थाय) श्रेष्ठिन्! गृह्यतां किञ्चिद् घटोदकं पीयतां च विषनाशाय।

**(कपाली हस्ते कृत्वा तदुदकं पिबति, कटे च शेते।)**

---

[१७६] हि+अङ्कः
[१७७] सर्वलयः+तदा
[१७८] लोभः+माम्
[१७९] धन्यः+असि
[१८०] सिन्दूरादिकं+च
[१८१] कम्पितहस्तः+दशतोलकसुवर्णं
[१८२] वस्त्रेण+छादयति

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



**तान्त्रिकः।** (ध्यानमुद्रया किञ्चित् कालम् अतीत्य) इदानीं मन्ये श्रेष्ठी सुखं निद्राति। अयमवसरः सुवर्णग्रहणस्य।

**(इति घटमध्यात् सुवर्णं गृहीत्वा निष्क्रान्तः। ततः प्रविशति पङ्गुरामः।)**

**पङ्गुरामः।** कथं सुहं निद्दइ कत्ता। इध आसनं इध हेअपूजणस्य उवचारो, ण उण दीसह वम्भणो। इध पाउआचउट्ठअं पडिदं दीसइ ता भट्ट, णो पाएसुं पाउआजुअलं धारेमि, अण्णं पाउआजुअलं आसणस्य उपरि ठाविअ देव्वंविअ पूएमि। एतस्स कारणादो मए बलियं दुक्खं लद्धं। दाणिं पूअनेन पाउआदेवीओ पीदिं उप्पादेमि। [कथं सुखं निद्राति कर्ता। इहासनम्[१८३] इह पूजनस्योपचारः[१८४], न पुनर्दृश्यते[१८५] ब्राह्मणः। इह पादुकाचतुष्टयं पतितं दृश्यते। तद् भर्तुः पादयोः पादुकायुगलं धारयामि, अन्यत् पादुकायुगलम् आसनस्योपरि[१८६] स्थापयित्वा देवम् इव पूजयामि। एतस्य कारणान्मया[१८७] बलवद् दुःखं लब्धम्। इदानीं पूजनेन पादुकादेव्याः प्रीतिम् उत्पादयामि।]

**(इति निद्रितस्य कपालिनः पादयोः पादुके आमुञ्चति। ततश्च[१८८] पादुकाद्वयम् आसने स्थापयित्वा ध्यानमुद्रां प्रदर्शयति।)**

**तान्त्रिकः।** (प्रविश्य) अहो सर्वं विनाशितम्। भोः श्रेष्ठिन्? न चेतयसे? सर्वं सुवर्णं गतं दासस्पर्शात्। हा धिक्! हा धिक्! सर्वं विनाशितम्!

**कपाली।** (निद्राया उत्थाय) आः आः! किं वृत्तं किं वृत्तम्?

**तान्त्रिकः।** तव दासेन पादुकारोपणेन§ पूजाद्रव्यं सर्वं विनाशितम्। सुवर्णम् अपि द्रवीभूतम्!

---

[१८३] इह+आसनम्
[१८४] पूजनस्य+उपचारः
[१८५] पुनः+दृश्यते
[१८६] आसनस्य+उपरि
[१८७] कारणात्+मया
[१८८] ततः+च

**कपाली।** अरे पाषण्ड! सर्वं विनाशितं त्वया गृहप्रविष्टमात्रेण। किं निमित्तम् अत्रागतोऽसि[१८९] पापिष्ठ, येन जाता मे महती विनष्टिः! अधुनैव[१९०] त्वं परकीयपादुकायुगलं करे कृत्वा बहिर्गच्छ[१९१], अन्यथा प्रहारेण त्वां हनिष्यामि।

**पङ्गुरामः।** लद्धपाउआजुअलोवि ण तुमं तुट्ठोसि, ता पलाइस्सं। [लब्धपादुकायुगलोऽपि[१९२] न त्वं तुष्टोऽसि[१९३], तत् पलायिष्ये।] (इति निष्क्रान्तः)

**कपाली।** गुरो! पश्य सुवर्णं घटमध्ये वर्तते न वा?

**तान्त्रिकः।** (घटमध्ये हस्तं दत्त्वा) सर्वं द्रवीभूतम्। दैवनियमः केन लङ्घनीयः? (रिक्तं हस्तं प्रसारयति।)

**कपाली।** हा धिक्! हा धिक्! दशतोलकं सुवर्णम् अद्य विनष्टम्? किं करोमि? क्व यामि? गुरो! त्वं तावत् क्वासीः[१९४]? यद् दासोऽयं[१९५] घटस्पर्शसाहसं कुर्वन् न त्वया वारितः।

**तान्त्रिकः।** श्रेष्ठिन्। अहमासं समाधिमग्नः। त्वं तावत् क्व गतवान् असि? यत् त्वया न निवारितोऽयं[१९६] धृष्टो दासः?

**कपाली।** न जानामि, मन्ये निद्राभिभूत एवासम्। हा दुर्दैवम्!

**तान्त्रिकः।** अलं परिदेवितेन। पुनर्दीयतां[१९७] विंशतितोलकं सुर्वणं तेन ते षष्टितोलकसुवर्णलाभो भवेत्।

**कपाली।** गुरो! अपि सत्यम्? पुनरपि नष्टं धनं लप्स्ये?

---

[१८९] अत्र+आगतः+असि
[१९०] अधुना+एव
[१९१] बहिः+गच्छ
[१९२] लब्धपादुकायुगलः+अपि
[१९३] तुष्टः+असि
[१९४] क्व+आसीः
[१९५] दासः+अयम्
[१९६] निवारितः+अयं
[१९७] पुनर्+दीयतां

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.



**तान्त्रिकः।** अथ किम्। त्वं स्वयं वा त्वदीया भार्या वा नष्टं सुवर्णम् अवश्यं प्राप्स्यसि।

**(ततः प्रविशति रङ्गिणी मन्थरापङ्गुरामाभ्याम् अन्विता।)**

**रङ्गिणी।** (स्वगतम्) लब्धं दशतोलकं सुवर्णं प्रतिवेशिभिर्दत्तम्[१९८]। (प्रकाशम्) गुरो! पूर्वम् अज्ञानतः प्रत्याख्यातं चिपिटकचर्वणव्रतं करोमि। जीवय मम पतिम्।

**मन्थरा।** अम्हेवि करेम्ह। जीवेहि गेहस्वामिणं। (आवाम् अपि कुर्वः। जीवय गृहस्वामिनम्।)

**तान्त्रिकः।** श्रेष्ठिन्! पश्य सर्वेषां सुबुद्धिरागता। किम् अतः परम् अपि प्रियं करोमि। तथापीदम्[१९९] अस्तु।

कृपणा विदुषे कृपार्पणे
कमला पङ्कभवाङ्कशोभिनी।
सरसा भवतात् सरस्वती-
प्रियसूनुष्वपहाय[२००] वैरिताम्॥

इति सिद्धगौतमकुलोद्भवाचार्यपञ्चाननतर्करत्नसूनुश्रीश्रीजीवन्यायतीर्थरचितं चिपिटकचर्वणं नाम प्रहसनं समाप्तम्।

---

[१९८] प्रतिवेशिभिः+दत्तम्
[१९९] तथा+अपि+इदम्
[२००] प्रियसूनुषु+अपहाय

# परिशिष्टम्

## विशिष्टानां पदानां व्युत्पत्तिविग्रहादि

१. अकरिष्यत्=√डुकृञ् करणे; लृङि प्रथमपुरुषे एकवचनम्।

२. अनुधावामि=अनु-√धावु गतौ; लटि उत्तमपुरुषे एकवचनम्।

३. अनुमेयः=अनु-√मा माने+यत्। 'अचो यत्' (अष्टाध्यायी ३.१.९७) इति सूत्रेण यत्-प्रत्ययः। 'ईद्यति' (अष्टाध्यायी ६.४.६५) इति सूत्रेण मा इत्यस्य आकारस्य ईकारादेशात् परं 'सार्वधातुकार्धधातुकयोः' (अष्टाध्यायी ७.३.८४) इति सूत्रेण ईकारस्य गुणः। पुंसि प्रथमायाम् एकवचनम्।

४. अनुरुद्धः=अनु-√रुधिर् आवरणे+क्त। पुंसि प्रथमायाम् एकवचनम्।

५. अन्तर्हितम्=अन्तर्-√धा+क्त। 'दधातेर्हि' (अष्टाध्यायी ७.४.४२) इति सूत्रेण धा इत्यस्य स्थाने हि इति आदेशः भवति। नपुंसके प्रथमायाम् एकवचनम्।

६. अभविष्यत्=√भू सत्तायाम्+लृङि प्रथमपुरुषे एकवचनम्।

७. अभिलषामि=अभि-√लष कान्तौ; उत्तमपुरुषे एकवचनम्।

८. अवस्थातुम्=अव-√ष्ठा गतिनिवृत्तौ+तुमुन्।

९. आकर्णितम्=आ-√कर्ण भेदने+क्त। नपुंसके प्रथमायाम् एकवचनम्।

१०. आकारयसि=आ-√डुकृञ् करणे+णिच्; लटि मध्यमपुरुषे एकवचनम्।

११. आक्रमितुम्=आ-√क्रमु पादविक्षेपे+तुमुन्।

१२. आक्रम्य=आ-√क्रमु पादविक्षेपे+ल्यप्।

१३. आच्छेत्तुम्=आ-√छिदिर् द्वैधीकरणे+तुमुन्।

१४. आनीयताम्=आ-√णीञ् प्रापणे; कर्मणि लोटि प्रथमपुरुषे एकवचनम्।

१५. आशङ्क्य=आ-√शकि शङ्कायाम्+ल्यप्।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.

१६. आहूय=आ-√ह्वेञ् शब्दे+ल्यप्।

१७. आहूयन्ताम्=आ-√ह्वेञ् शब्दे; कर्मणि लोटि प्रथमपुरुषे बहुवचनम्।

१८. उद्विजसे=उद्-√ओविजी भये; लटि मध्यमपुरुषे एकवचनम्।

१९. उपचीयते=उप-√चिञ् चयने; कर्मणि लटि प्रथमपुरुषे एकवचनम्।

२०. एतादृशम्="एतद् इव" इति विग्रहे 'त्यदादिषु दृशोऽनालोचने कञ् च' (अष्टाध्यायी ३.२.६०) इति सूत्रेण एतद् इति उपपदस्य सन्निहितात् √दृशिर् प्रेक्षणे इति धातोः कञ्-प्रत्यये दृश इति जायते। ततः एतद् इति उपपदेन सह दृश इत्यस्य 'उपपदमतिङ्' (अष्टाध्यायी २.२.१९) इति सूत्रेण समासः भवति। तेन एतद्दृश जाते 'आ सर्वनाम्नः' (अष्टाध्यायी ६.३.९१) इति सूत्रेण एतद् इत्यस्य दकारस्य स्थाने आकारादेशे सवर्णदीर्घे एतादृश इति शब्दः निष्पाद्यते। तस्य प्रथमायाम् एकवचने इदं रूपम्।

२१. एवंविधा=एवं विधा यस्याः सा एवंविधा (बहुव्रीहिः)। विधा इति शब्दस्य प्रकारः अर्थः।

२२. ओष्ठस्पन्दनम्=ओष्ठस्य स्पन्दनम् (षष्ठीतत्पुरुषः)।

२३. औषधसङ्ग्रहः=औषधस्य सङ्ग्रहः (षष्ठीतत्पुरुषः)। सम्-=√ग्रह उपादाने+अप्। 'ग्रहवृदृनिश्चिगमश्च' (अष्टाध्यायी ३.३.५८) इति सूत्रेण अप्-प्रत्ययः। प्रथमायाम् एकवचनम्।

२४. कम्पितहस्तः=कम्पितः हस्तः यस्य स कम्पितहस्तः। (बहुव्रीहिः)

२५. करवाणि=√डुकृञ् करणे+लोटि उत्तमपुरुषे एकवचनम्।

२६. कामयते=√कमु कान्तौ+लटि प्रथमपुरुषे एकवचनम्।

२७. कालात्ययः= कालस्य अत्ययः (षष्ठीतत्पुरुषः)। कालात्यय, प्रथमायाम् एकवचनम्।





२८. कीटकूटाकुलितम्= कीटानां कूटं कीटकूटम् (षष्ठीतत्पुरुषः)। आ-√ कुल संस्त्याने बन्धुषु च+क्त=आकुलित। कीटकूटैः आकुलितं कीटकूटाकुलितम् (तृतीयातत्पुरुषः)। कीटकूटाकुलित, प्रथमायाम् एकवचनम्।

२९. कुक्कुरविषविकारार्तः=कुक्कुरस्य विषं कुक्कुरविषम् (षष्ठीतत्पुरुषः)। कुक्कुरविषस्य विकारः कुक्कुरविषविकारः (षष्ठीतत्पुरुषः)। कुक्कुरविषविकारेण आर्तः कुक्कुरविषविकारार्तः (तृतीयातत्पुरुषः)।

३०. कुपितः=√कुप क्रोधे+क्त। 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' (अष्टाध्यायी ३.४.७२) इति सूत्रेण कर्तरि क्तः। पुंसि प्रथमायाम् एकवचनम्।

३१. कृततान्त्रिककपटवेषः=कपटः वेषः कपटवेषः (कर्मधारयः)। तान्त्रिकस्य कपटवेषः तान्त्रिककपटवेषः (षष्ठीतत्पुरुषः)। कृतः तान्त्रिककपटवेषः येन सः (बहुव्रीहिः)। कृततान्त्रिककपटवेष, प्रथमायाम् एकवचनम्।

३२. क्षतस्थानदाहः= √क्षणु हिंसायाम्+क्त=क्षत। क्षतं स्थानम् क्षतस्थानम् (कर्मधारयः)। क्षतस्थानस्य दाहः (षष्ठीतत्पुरुषः)। क्षतस्थानदाह, प्रथमायाम् एकवचनम्।

३३. क्षरति=√क्षर सञ्चलने+लटि प्रथमपुरुषे एकवचनम्।

३४. गललग्नीकृतवासाः=√लगे सङ्गे+क्त=लग्न। √डुकृञ् करणे+क्त=कृत। अलग्नं लग्नं कृतम् इति लग्नीकृतम्। लग्न-शब्दात् अभूततद्भावार्थे 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (अष्टाध्यायी ५.४.५०) च्विप्रत्ययः। ततः लग्नी इति च्व्यन्तस्य 'ऊर्यादिच्विडाचश्च' इति सूत्रेण गतिसंज्ञा भवति। तस्य कृत इति क्तान्तेन सह 'कुगतिप्रादयः' (अष्टाध्यायी २.२.१८) इति सूत्रेण समासः। तेन लग्नीकृत इति भवति। गले लग्नीकृतं गललग्नीकृतम् (सप्तमीतत्पुरुषः)। गललग्नीकृतं वासः यया सा गललग्नीकृतवासाः (बहुव्रीहिः)। गललग्नीकृतवासस्, प्रथमायाम् एकवचनम्।

३५. गुरुजनाज्ञालङ्घनपातकपरिहाराय= गुरुः जनः गुरुजनः (कर्मधारयः)। गुरुजनस्य आज्ञा गुरुजनाज्ञा (षष्ठीतत्पुरुषः)। गुरुजनाज्ञायाः लङ्घनम्

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.

गुरुजनाज्ञालङ्घनम् (षष्ठीतत्पुरुषः)। गुरुजनाज्ञालङ्घनम् एव पातकम् गुरुजनाज्ञालङ्घनपातकम् (कर्मधारयः)। गुरुजनाज्ञालङ्घनपातकस्य परिहारः गुरुजनाज्ञालङ्घनपातकपरिहारः (षष्ठीतत्पुरुषः)। गुरुजनाज्ञालङ्घनपातकपरिहार, चतुर्थ्याम् एकवचनम्।

३६. गृहाण=√ग्रह उपादाने; लोटि मध्यमपुरुषे एकवचनम्।

३७. ग्रहणीयः=√ग्रह उपादाने+अनीयर्। पुंसि प्रथमायाम् एकवचनम्।

३८. घासलुब्धः=घासे लुब्धः घासलुब्धः (सप्तमीतत्पुरुषः)

३९. चेष्टते=√चेष्ट चेष्टायाम्; लटि प्रथमपुरुषे एकवचनम्।

४०. जीर्णम्=√जॄ वयोहानौ+क्त। 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' (अष्टाध्यायी ३.४.७२) इति सूत्रेण कर्तरि क्तः। नपुंसके प्रथमायाम् एकवचनम्।

४१. डाकिनीशाकिनीभूतपिशाचग्रहावेशविषविकारप्रशमनम्= ग्रहस्य आवेशः ग्रहावेशः (षष्ठीतत्पुरुषः)। विषस्य विकारः विषविकारः (षष्ठीतत्पुरुषः)। डाकिनी च शाकिनी च भूतः च पिशाचः च ग्रहावेशः च विषविकारः च डाकिनीशाकिनीभूतपिशाचग्रहावेशविषविकाराः। डाकिनीशाकिनीभूतपिशाचग्रहावेशविषविकाराणां प्रशमनम् (षष्ठीतत्पुरुषः)। डाकिनीशाकिनीभूतपिशाचग्रहावेशविषविकारप्रशमन, प्रथमायाम् एकवचनम्।

४२. तदीयभार्यायै=तदीया भार्या तदीयभार्या (कर्मधारयः)। तस्य इदम् इति विग्रहे तद्-शब्दात् छ-प्रत्यये तदीय इति भवति। 'त्यदादीनि च' (अष्टाध्यायी १.१.७४) इति सूत्रेण तद्-शब्दस्य वृद्धसंज्ञायां 'वृद्धाच्छः' (अष्टाध्यायी ४.२.११४) इति सूत्रेण छ-प्रत्ययः। तदीयभार्याशब्दस्य चतुर्थ्याम् एकवचनम्।

४३. तुष्टः=√तुष प्रीतौ+क्त। 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' (अष्टाध्यायी ३.४.७२) इति सूत्रेण कर्तरि क्तः। पुंसि प्रथमायाम् एकवचनम्।





४४. त्वादृशः="त्वम् इव" इति विग्रहे 'त्यदादिषु दृशोऽनालोचने कञ् च' (अष्टाध्यायी ३.२.६०) इति सूत्रेण युष्मद् इति उपपदस्य सन्निहितात् √दृशिर् प्रेक्षणे इति धातोः कञ्-प्रत्यये दृश इति जायते। ततः युष्मद् इति उपपदेन सह दृश इत्यस्य 'उपपदमतिङ्' (अष्टाध्यायी २.२.१९) इति सूत्रेण समासः भवति। तेन युष्मद्दृश जाते 'त्वमावेकवचने' (अष्टाध्यायी ७.२.९७) इति सूत्रेण युष्मद् इत्यस्य स्थाने त्वद् इति आदेशे त्वद्दृश इति जाते 'आ सर्वनाम्नः' (अष्टाध्यायी ६.३.९१) इति सूत्रेण त्वद् इत्यस्य दकारस्य स्थाने आकारादेशे सवर्णदीर्घे त्वादृश इति शब्दः निष्पाद्यते। तस्य प्रथमायाम् एकवचने इदं रूपम्। एवम् एव "अहम् इव" इति विग्रहे मादृशः इति भवति।

४५. दङ्क्ष्यति=√दन्श दंशने; लृटि प्रथमपुरुषे एकवचनम्।

४६. दारिद्र्यदुःखप्रशमनार्थम्=दारिद्र्यम् एव दुःखं दारिद्र्यदुःखम् (कर्मधारयः)। दारिद्र्यदुःखस्य प्रशमनं दारिद्र्यदुःखप्रशमनम् (षष्ठीतत्पुरुषः)। दारिद्र्यदुःखप्रशमनाय इदम् दारिद्र्यदुःखप्रशमनार्थम् (अर्थशब्देन नित्यसमासः)।

४७. दासापसद=दासः अपसदः दासापसदः। 'कुत्सितानि कुत्सनैः' (अष्टाध्यायी २.१.५३) इति सूत्रेण कर्मधारयः।

४८. दीयताम्=√डुदाञ् दाने; कर्मणि लोटि प्रथमपुरुषे एकवचनम्।

४९. दुर्दमः=दुर्-√दमु उपशमे+खल्। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (अष्टाध्यायी ३.३.१२६) इति सूत्रेण दुर्-इत्युपसर्गपूर्वकात् दम्-धातोः कर्मणि अर्थे खल्-प्रत्यये दुर्दम इति। सर्वत्र खल्-प्रत्ययान्तशब्दानाम् इत्थं प्रक्रिया द्रष्टव्या। दुर्दम, पुंसि प्रथमायाम् एकवचनम्।

५०. दुर्भाग्यदुर्ग्रह=दुष्टं भाग्यं दुर्भाग्यम् इति 'कुगतिप्रादयः' (अष्टाध्यायी २.२.१८) इति सूत्रेण दुर् इत्यनेन भाग्यशब्दस्य समासः। दुष्टः ग्रहः दुर्ग्रहः। दुर्भाग्यसूचकः दुर्ग्रहः दुर्भाग्यदुर्ग्रहः इति उत्तरपदलोपी कर्मधारयः।

५१. दुर्मूल्यम्=दुःस्थितं मूल्यं यस्य तत् दुर्मूल्यम् (बहुव्रीहिः)। 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति वार्तिकेन समासः स्थित इति उत्तरपदस्य लोपः च।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

५२. दुर्लभः=दुर्-√डुलभष् प्राप्तौ+खल्। दुर्लभ, पुंसि प्रथमायाम् एकवचनम्।

५३. दुर्व्यवसितम्=दुर्+वि+अव-√षिञ् बन्धने+क्त। नपुंसके प्रथमायाम् एकवचनम्

५४. दुष्प्रापम्=दुर्+प्र-√आप्लृ व्याप्तौ+खल्। दुष्प्राप, नपुंसके द्वितीयायाम् एकवचनम्। घृतस्य विशेषणम्।

५५. द्रष्टुम्=√दृशिर् प्रेक्षणे+तुमुन्।

५६. धारयितुम्=√धृञ् धारणे+तुमुन्।

५७. नखदन्तेन=नखाः च दन्ताः च नखदन्तम् (इतरेतरद्वन्द्वः)। 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (अष्टाध्यायी २.४.२) इति सूत्रेण एकवद्भावः। तृतीयायाम् एकवचनम्।

५८. नारिकेलखण्डमिश्रचिपिटकचर्वणम्= नारिकेलस्य खण्डः नारिकेलखण्डः (षष्ठीतत्पुरुषः)। नारिकेलखण्डेन मिश्रं नारिकेलखण्डमिश्रम् (तृतीया-तत्पुरुषः)। नारिकेलखण्डमिश्रं चिपिटकम् नारिकेलखण्डमिश्रचिपिटकम् (कर्मधारयः)। नारिकेलखण्डमिश्रचिपिटकस्य चर्वणम् नारिकेलखण्डमिश्र-चिपिटकचर्वणम् (षष्ठीतत्पुरुषः)। नारिकेलखण्डमिश्रचिपिटकचर्वण, द्वितीयायाम् एकवचनम्।

५९. नाशय=√णश अदर्शने+लोटि मध्यमपुरुषे एकवचनम्।

६०. निग्रहम्=नि-√ग्रह उपादाने+अप्। 'ग्रहवृदृनिश्चिगमश्च' (अष्टाध्यायी ३.३.५८) इति सूत्रेण अप्-प्रत्ययः। द्वितीयायाम् एकवचनम्।

६१. निजगृहात्=निजं च तद् गृहम् (कर्मधारयः)। पञ्चम्याम् एकवचनम्।

६२. निर्लज्जम्= लज्जायाः अभावः (अवययीभावः)। क्रियाविशेषणम्।

६३. निर्वाहयितुम्=निर्-√वह प्रापणे+णिच्+तुमुन्।

६४. निवेशयिष्यामि=नि-√विश प्रवेशने; लृटि उत्तमपुरुषे एकवचनम्।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.





६५. निश्चिन्ता=निर्गता चिन्ता यस्याः निश्चिन्ता (बहुव्रीहिः)। 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति वार्तिकेन समासः गता इति उत्तरपदस्य लोपः च।

६६. निःशङ्कम्=शङ्कायाः अभावः (अव्ययीभावः)।

६७. पलायिष्ये=परा-√अय गतौ+लृटि उत्तमपुरुषे एकवचनम्। 'उपसर्गस्यायतौ' (अष्टाध्यायी ८.२.१९) इति सूत्रेण परा इत्यस्य रेफस्य लकारः।

६८. पादुकातङ्करोगः=पादुकायाः आतङ्कः (पञ्चमीतत्पुरुषः)। पादुकातङ्कः एव रोगः (कर्मधारयः)।

६९. पादुकामुखः=पादुका मुखे यस्य सः (बहुव्रीहिः)।

७०. पादुकारोपणेन=पादुकायाः रोपणम् (षष्ठीतत्पुरुषः)। ततः तृतीयायाम् एकवचनम्। √रुह प्रादुर्भावे+णिच्+ल्युट्=रोपणम्। 'रुहः पोऽन्यतरस्याम्' (अष्टाध्यायी ७.३.४३) इति सूत्रेण हकारस्य पकारः। पादुकारोपणेन इत्यत्र तृतीयायाम् एकवचनम्।

७१. पुरुषसिंहम्=पुरुषः सिंहः इव पुरुषसिंहः (उपमितकर्मधारयः) 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (अष्टाध्यायी २.१.५६) इति सूत्रेण समासः। पुरुषसिंह, द्वितीयायाम् एकवचनम्।

७२. प्रवृत्तः=√वृतु वर्तने+क्त। 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुह-जीर्यतिभ्यश्च' (अष्टाध्यायी ३.४.७२) इति सूत्रेण कर्तरि क्तः। पुंसि प्रथमायाम् एकवचनम्।

७३. प्रेक्ष्य=प्र-√ईक्ष दर्शने+ल्यप्।

७४. बम्भ्रम्यमाणः=√भ्रमु अनवस्थाने+यङ्=√बम्भ्रम्य+शानच्। पुंसि प्रथमायाम् एकवचनम्।

७५. बुद्धिबृहस्पते=बुद्धौ बृहस्पतिः बुद्धिबृहस्पतिः (सप्तमीतत्पुरुषः)। सम्बोधने एकवचनम्।

७६. बोधयसि=√बुध अवगमने+णिच्; लटि प्रथमपुरुषे एकवचनम्।

७७. भक्ष्यमाणाम्=√भक्ष अदने; कर्मणि शानच्। ततः स्त्रियां टाप्। भक्ष्यमाणा, द्वितीयायाम् एकवचनम्।

७८. भग्नम्=√भन्जो आमर्दने+क्त। नपुंसके प्रथमायाम् एकवचनम्।

७९. भद्रमुखाः=भद्रेषु मुखाः (सप्तमीतत्पुरुषः)। मुखशब्दस्य प्रमुखः/प्रधानः इति अर्थः।

८०. भाग्यवान्=भाग्य+मतुप्। भाग्यवत्, प्रथमायाम् एकवचनम्।

८१. भिषक्प्रवरः=भिषजां प्रवरः (षष्ठीतत्पुरुषः)।

८२. मन्त्रपूताम्=मन्त्रेण पूता (तृतीयातत्पुरुषः)। √पूञ् पवने+क्त=पूत, स्त्रियां पूता। मन्त्रपूता, द्वितीयायाम् एकवचनम्।

८३. मर्षयतु=√मृष तितिक्षायाम्; लोटि प्रथमपुरुषे एकवचनम्।

८४. महाधनिकस्य=महान् धनिकः महाधनिकः (कर्मधारयः)। धनम् अस्य अस्ति इति विग्रहे धनशब्दात् 'अत इनिठनौ' (अष्टाध्यायी ५.२.११५) इति सूत्रेण ठन्प्रत्यये धनिक इति शब्दः निष्पाद्यते। षष्ठ्याम् एकवचनम्।

८५. महामूल्यम्=महत् मूल्यं यस्य तत् महामूल्यम् (बहुव्रीहिः)।

८६. मुञ्चति=√मुच प्रमोचने; लटि प्रथमपुरुषे एकवचनम्।

८७. यथाप्राप्तम्=प्राप्तस्य योग्यम् (अव्ययीभावः)। अत्र योग्यतार्थकेन यथाशब्देन सह अव्ययीभावः 'यथासादृश्ये' (अष्टाध्यायी २.१.७) इति सूत्रेण।

८८. रक्तरोधः=रक्तस्य रोधः रक्तरोधः (षष्ठीतत्पुरुषः)। √रुधिर् आवरणे+घञ्=रोध। रक्तरोध, प्रथमायाम् एकवचनम्।

८९. रसिकताम्=रसः अस्य अस्ति इति विग्रहे रस-शब्दात् ठन्-प्रत्यये रसिकः इति। रसिकस्य भावः इति विग्रहे रसिकशब्दात् तल्-प्रत्यये रसिकता।

Kavikulguru Kalidas Sanskrit University Ramtek Collection





९०. लक्ष्यताम्=√लक्ष दर्शने; कर्मणि लोटि प्रथमपुरुषे एकवचनम्।

९१. विचक्षणः=वि√ख्याञ् प्रकथने+ल्यु। 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (अष्टाध्यायी ३.१.१३४) इति सूत्रेण ल्यु-प्रत्ययः।

९२. विधेयः= वि√डुधाञ् धारणपोषणयोः+यत्। पुंसि प्रथमायाम् एकवचनम्।

९३. विनिक्षिप्तम्=वि+नि-√क्षिप प्रेरणे+क्त। नपुंसके प्रथमायाम् एकवचनम्।

९४. विषविकारप्रशमनार्थम्= विषस्य विकारः विषविकारः (षष्ठीतत्पुरुषः)। विषविकारस्य प्रशमनम् विषविकारप्रशमनम् (षष्ठीतत्पुरुषः)। विषविकारप्रशमनाय इदम् इति विग्रहे अर्थशब्देन नित्यसमासे विषविकारप्रशमनार्थम्। विषविकारप्रशमनार्थ, क्रियाविशेषणे द्वितीया।

९५. विस्तीर्य=वि-√स्तृञ् आच्छादने+ल्यप्।

९६. व्यापृतः=वि+आ-√पृ प्रीतौ+क्त। पुंसि प्रथमायाम् एकवचनम्।

९७. शतच्छिद्रम्=शतं छिद्राणि यस्मिन् तत् शतच्छिद्रम् (बहुव्रीहिः)।

९८. शयानः=√शीङ् स्वप्ने+शानच्। पुंसि प्रथमायाम् एकवचन्।

९९. शुना=श्वन्, तृतीयायाम् एकवचनम्।

१००. शोधयसि=√शुध शौचे+णिच्+लटि प्रथमपुरुषे एकवचनम्।

१०१. श्रूयताम्=√श्रु श्रवणे+कर्मणि लोटि प्रथमपुरुषे एकवचनम्।

१०२. समापन्ना=सम्+आ-√पद गतौ+क्त। स्त्रियां प्रथमायाम् एकवचनम्।

१०३. सम्पद्विशेषाधिगमः=सम्पदः विशेषः सम्पद्विशेषः (षष्ठीतत्पुरुषः)। सम्पद्विशेषस्य अधिगमः सम्पद्विशेषाधिगमः (षष्ठीतत्पुरुषः)। अधि-√गमॢ गतौ+अप्+अधिगम। 'ग्रहवृदृनिश्चिगमश्च' (अष्टाध्यायी ३.३.५८) इति सूत्रेण अप्-प्रत्ययः।

१०४. सम्यगुत्तप्तलोहशलाकया= उद्-√तप सन्तापे+क्त=उत्तप्त। लोहस्य शलाका लोहशलाका (षष्ठीतत्पुरुषः)। सम्यग् उत्तप्ता सम्यगुत्तप्ता (कर्मधारयः)। सम्यगुत्तप्ता लोहशलाका सम्यगुत्तप्तलोहशलाका (कर्मधारयः)। सम्यगुत्तप्तलोहशलाका, तृतीयायाम् एकवचनम्।

१०५. सहायीकरोमि= असहायः सहायं करोमि इति तात्पर्यतः करोमि इत्यस्य योगेन सहायशब्दात् 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (अष्टाध्यायी ५.४.५०) इति सूत्रेण च्वि-प्रत्यये सहायी इति। √डुकृञ् करणे; लटि उत्तमपुरुषे एकवचनम्।

१०६. सीतासावित्रीदमयन्तीप्रतिमे= सीता च सावित्री च दमयन्ती च सीतासावित्रीदमयन्त्यः (इतरेतरयोगद्वन्द्वः)। सीतासावित्रीदमयन्तीनां प्रतिमा इव (उपमानकर्मधारयः)। सीतासावित्रीदमयन्तीप्रतिमा, सम्बोधने एकवचनम्।

१०७. सुचूर्णिता=शोभनतया चूर्णिता (प्रादितत्पुरुषः)। =√चूर्ण सङ्कोचने+क्त, स्त्रियां चूर्णिता। सुचूर्णिता प्रथमायाम् एकवचनम्।

१०८. सुस्थः=सु-√ष्ठा गतिनिवृत्तौ+क। पुंसि प्रथमायाम् एकवचनम्।

१०९. संयन्तु=सम्-√यम उपरमे+तुमुन्।

११०. स्वल्पमात्रा=शोभनः अल्पः स्वल्पः (प्रादितत्पुरुषः)। स्वल्पा मात्रा यस्याः सा स्वल्पमात्रा (बहुव्रीहिः)।

१११. हस्तपादविधारणाय=हस्तौ च पादौ च हस्तपादम् (इतरेतरद्वन्द्वः)। 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (अष्टाध्यायी २.४.२) इति सूत्रेण एकवद्भावः। हस्तपादस्य विधारणम् हस्तपादविधारणम् (षष्ठीतत्पुरुषः)। चतुर्थ्याम् एकवचनम्।

११२. हस्तपादादिविकारम्=हस्तौ च पादौ च हस्तपादम् (इतरेतरद्वन्द्वः)। हस्तपादम् आदौ येषां ते हस्तपादादयः (बहुव्रीहिः)। हस्तपादादीनां विकारः हस्तपादादिविकारः (षष्ठीतत्पुरुषः)।



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



# प्रहसने प्रतिपादितयोः प्रथयोः परिचयः

## कोजागरे चिपिटकचर्वणम्

मुख्यचान्द्रस्य आश्वयुजमासस्य पौर्णमासी तिथिः कोजागरी तिथिः उत कोजागरी पूर्णिमा इति ख्याता। अस्यां तिथौ देव्याः लक्ष्म्याः पूजनं कर्तव्यम् इति धर्मशास्त्रीयं विधानम्। तथा च धर्मसिन्धुग्रन्थे आश्विनपौर्णमासीतिथिकृत्यनिरूपणप्रसङ्गे उच्यते–

"आश्विनपौर्णमास्यां कोजागरव्रतम्। ...अत्र लक्ष्मीन्द्रयोः पूजनं जागरणम् अक्षक्रीडा च विहिता।...
नारीकेरोदकं पीत्वा अक्षक्रीडां समारभेत्।
निशीथे वरदा लक्ष्मीः को जागर्तीति भाषिणी।
तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः॥
नारीकेरोदकान् पृथुकांश्च देवेभ्यः पितृभ्यः समर्प्य बन्धुभिः सह स्वयं भक्षयेत्।"

रघुनन्दनभट्टाचार्यसङ्कलिते अष्टाविंशतितत्त्वे अपि तिथितत्त्वनामकाध्याये आश्विनपूर्णिमाकृत्यस्य निरूपणप्रसङ्गे इत्थं वर्णनं लभ्यते।

धर्मशास्त्रे स्पष्टतया एव उक्तं वर्तते यत् कोजागरव्रते लक्ष्मीन्द्रयोः पूजनं कृत्वा नारिकेलोदकं चिपिटकं च देवेभ्यः पितृभ्यः च निवेद्य परिवारजनैः सह भोक्तव्यम्। ततः अक्षक्रीडया रात्रिजागरणम् अपि विहितम्। तथा क्रियते चेत् निशीथे देवी लक्ष्मीः "को जागर्ति" इति कथयन्ती जाग्रते जनाय धनं प्रयच्छति।

## नष्टचन्द्रदर्शनम्

भाद्रपदमासस्य उभयपक्षयोः चतुर्थ्यां तिथौ समुदितः चन्द्रः नष्टचन्द्रः इति कथ्यते। अस्य दर्शनम् अनर्थककलङ्काय भवति इति हि पौराणिकी प्रसिद्धिः। तत्र अपि भाद्रपदशुक्लचतुर्थ्यां चन्द्रदर्शने विशेषनिषेधः दृश्यते। सा तिथिः गणेशचतुर्थीरूपेण पाल्यते भारतस्य प्रायः सर्वेषु अपि प्रान्तेषु।

कदाचित् कुबेरेण निमन्त्रितः गणेशः कांश्चन मोदकान् आदाय तमसाच्छन्नेन

मार्गेण कैलाशं प्रत्यावर्तते स्म। पथि चन्द्रालोके प्रकाशिते मार्गे कञ्चन सर्पं दृष्ट्वा भीतः मूषकः सहसा अधावत्। तेन गणेशः पथि पतितः। तं पतितं दृष्ट्वा चन्द्रः अहसत्। चन्द्रदेवः स्वस्य रूपेण दर्पं प्रकटयति स्म। कुपितः गणेशः चन्द्रस्य रूपदर्पं खण्डयितुं तं शशाप। गणेशः अवदत् यत्, चन्द्रस्य प्रकाशः नश्यति। गणेशस्य शापेन चन्द्रस्य प्रकाशः नष्टः। चराचरे अन्धकारः व्याप्तः। एतेन चन्द्रः देवाः च चिन्तिताः गणेशं प्रार्थयामासुः। तदा गणेशः कृपापरवशः सन् प्रतिपक्षं चन्द्रस्य कलानां वृद्धिं क्षयं च व्यवस्थापितवान्। अन्यम् अपि शापं दत्तवान् यत्, यस्मात् चतुर्थ्यां गणेशस्य उपहासं कृतवान् चन्द्रः तस्मात् चतुर्थ्यां विशेषतः भाद्रपदचतुर्थ्यां चन्द्रस्य दर्शनं यः करिष्यति स मिथ्याकलङ्कभाग् भविष्यति।

गणेशस्य इमं शापं स्मरन्तः जनाः भाद्रपदचतुर्थ्यां चन्द्रं न अवलोकयन्ति। कथञ्चिद् यदि नष्टचन्द्रस्य दर्शनं क्रियते तदा अपि गणेशचतुर्थ्यां गणेशपूजनात् परं काञ्चन कथां श्रुत्वा कञ्चन मन्त्रं च पठित्वा तस्माद् दोषात् मुक्तिं प्राप्नुयुः इति पौराणिकी प्रसिद्धिः। इयं च कथा श्रीमद्भागवतस्य दशमे स्कन्धे वर्तते। श्रीकृष्णस्य मित्रम् आसीत् सत्राजित्। स भगवतः मित्रस्य सकाशात् स्यमन्तकं नाम विशिष्टं मणिं प्राप्तवान्। तस्य प्रियमित्रं भगवान् श्रीकृष्णः कदाचित् इमं मणिं स्वल्पकालाय अयाचत। किन्तु स तस्मिन् मणौ तथा आसक्तः आसीत् यत् स तं मणिं दातुं निराकृतवान्।

कदाचित् तं मणिं स्वीकृत्य सत्राजितः भ्राता प्रसेनः तं मणिं धृत्वा मृगयार्थं वनं गतः। तत्र तं कश्चन सिंहः हत्वा मणिम् अपाहरत्। तं सिंहं जाम्बवान् हत्वा मणिं सिंहाद् अपाहरत्। तदा प्रसेनस्य मरणस्य तथा मणेः अपहरणस्य वार्तां ज्ञात्वा स श्रीकृष्णम् एव प्रसेनस्य हन्तारं मत्वा सर्वत्र श्रीकृष्णस्य कलङ्कम् उदघोषयत्।

कलङ्कमोचनार्थं श्रीकृष्णः अरण्यं गत्वा जाम्बवन्तं पराजित्य मणिम् उद्धृत्य सत्राजिते प्रत्यर्पितवान्।

कदाचित् भाद्रपदशुक्लचतुर्थ्यां चन्द्रम् अपश्यत् श्रीकृष्णः। अतः तस्मिन् मिथ्याकलङ्कारोपः जातः इति पुराणे प्रतिपादितम्। तदा आरभ्य एतादृशदोषाद् मुक्तये कश्चन मन्त्रः पठनीयः इति प्रथा आरब्धा। स च मन्त्रः इत्थम्–

सिंहः प्रसेनम् अवधीत् सिंहो जाम्बवता हतः।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः॥ इति।

वस्तुतः स्वस्य सम्पदि दर्पः, अन्यस्य विकृतशरीरादौ परिहासः त्याज्यः इति गणेशस्य चन्द्रशापे मुख्यं तत्त्वम्। चन्द्रः पूर्णिमायां पूर्णतां गतः अपि पुनः तस्य

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





क्षयः भवति। एवं लौकिकी सम्पत् स्थिरा न भवति। अतः तां सम्पदम् आश्रित्य दर्पः न उचितः।

अन्यस्य सम्पदि अनर्थकलोभः न कर्तव्यः। तेन लोकः तस्मिन् कलङ्कम् आरोपयति इति द्वितीयायाः कथायाः मुख्या शिक्षा। इमां शिक्षां पुनः पुनः स्मारयितुम् एव एषा प्रथा परिपाल्यते।

# श्लोकानां व्याख्यानम्

## नान्दीश्लोकः

चूताष्ठितुल्यचिपिटायितगण्डदेशा
चण्डक्रियारुचिरखण्डितहास्यलेशा।
कुप्यत्कपालिनयनानलसामिधेनी
पुष्णातु वो गणवधूः क्षणधूतवेणिः॥

**अन्वयः–**

चूताष्ठितुल्यचिपिटायितगण्डदेशा चण्डक्रियारुचिरखण्डितहास्यलेशा कुप्यत्कपालिनयनानलसामिधेनी क्षणधूतवेणिः गणवधूः वः पुष्णातु।

**पदपरिचयः–**

**चूताष्ठितुल्यचिपिटायितगण्डदेशा–** [चूतस्य अष्ठिः चूताष्ठिः (षष्ठीतत्पुरुषः)। चूताष्ठिना तुल्यः चूताष्ठितुल्यः (तृतीयातत्पुरुषः)। चूताष्ठितुल्यः च स चिपिटायितः च चूताष्ठितुल्यचिपिटायितः (कर्मधारयः)। चिपिट+क्यङ्=√चिपिटाय+क्त=चिपिटायित। गण्डः एव देशः गण्डदेशः (कर्मधारयः)। चूताष्ठितुल्यचिपिटायितः गण्डदेशः यस्याः सा (बहुव्रीहिः)।] (चूताष्ठितुल्यचिपिटायितगण्डदेशा, प्रथमायाम् एकवचनम्)
**चण्डक्रियारुचिः–** [चण्डा चासौ क्रिया च चण्डक्रिया (कर्मधारयः)। चण्डक्रियायां रुचिः यस्याः सा (बहुव्रीहिः)।] (चण्डक्रियारुचि, प्रथमायाम् एकवचनम्)
**अखण्डितहास्यलेशा–** [न खण्डितम् अखण्डितम् (नञ्तत्पुरुषः)। √खडि भेदने+क्त=खण्डित। हास्यस्य लेशः हास्यलेशः (षष्ठीतत्पुरुषः)। अखण्डितः हास्यलेशः यस्याः सा अखण्डितहास्यलेशा (बहुव्रीहिः)] (अखण्डितहास्यलेशा, प्रथमायाम् एकवचनम्)
**कुप्यत्कपालिनयनानलसामिधेनी–** [√कुप क्रोधे+शतृ=कुप्यत्। कुप्यन् च असौ कपाली च कुप्यत्कपाली (कर्मधारयः)। कुप्यत्कपालिनः नयनं कुप्यत्कपालिनयनं (षष्ठीतत्पुरुषः)। कुप्यत्कपालिनयनस्य अनलः कुप्यत्कपालिनयनानलः (षष्ठीतत्पुरुषः)। कुप्यत्कपालिनयनानलस्य सामिधेनी इव कुप्यत्कपालिनयनानलसामिधेनी (षष्ठीतत्पुरुषः)।] (कुप्यत्कपालिनयनानलसामिधेनी, प्रथमायाम् एकवचनम्)



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.



**क्षणधूतवेणिः–** [क्षणं धूता क्षणधूता (द्वितीयातत्पुरुषः)। √धूञ् कम्पने+क्त=धूत। क्षणधूता वेणिः यया सा क्षणधूतवेणिः (बहुव्रीहिः)।] (क्षणधूतवेणि, प्रथमायाम् एकवचनम्)
**गणवधूः–** [गणस्य वधूः गणवधूः (षष्ठीतत्पुरुषः)।] (गणवधू, प्रथमायाम् एकवचनम्)
**वः–** (युष्मद्, द्वितीयायां बहुवचनम्)
**पुष्णातु–** (√पुष पुष्टौ, लोटि प्रथमपुरुषे एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| चूताष्ठितुल्यचिपिटायितगण्डदेशा | आम्रबीजम् इव क्षामः गण्डदेशः यस्याः सा |
| चण्डक्रियारुचिः | भयङ्करक्रियासु रुचिमती |
| अखण्डितहास्यलेशा | अमलिनस्मितसम्पन्ना |
| कुप्यत्कपालिनयनानलसामिधेनी | क्रोधसम्पन्नस्य शिवस्य तृतीयनेत्रगतस्य अग्नेः इन्धनभूता |
| क्षणधूतवेणिः | मुहूर्ताय वेणीं कम्पयन्ती |
| गणवधूः | शिवपत्नी |
| वः | युष्मान् |
| पुष्णातु | वर्धयतु |

**सरलार्थः–**

यस्याः देव्याः गण्डदेशः आम्रस्य बीजम् इव क्षामः, भयङ्करीषु क्रियासु यस्याः रुचिः, अविरतं यस्याः अधरयोः स्मितं विराजते, या क्रुद्धस्य महादेवस्य तृतीयनेत्रगतस्य अग्नेः इन्धनस्वरूपा, या निमेषान् वेणीं कम्पयति सा शिवपत्नी महाकाली देवी युष्मान् पुष्णातु, युष्मभ्यं समृद्धिं प्रयच्छतु।

**विशिष्टशब्दानां विवेचनम्–**

**अष्ठि** इति शब्दस्य फलमध्यगतबीजम् इति अर्थः। √असु क्षेपणे इति धातोः क्तिन्-प्रत्ययः क्रियते। अस्+ति इति दशायां 'पृषोदरादीनि यथोपदिष्टम्' (अष्टाध्यायी ६.३.१०९) इति सूत्रेण धातोः सकारस्य मूर्धन्यादेशः तथा प्रत्ययस्य

तकारस्य थकारः निपात्यते। ततः अष्+थि इति दशायां 'ष्टुना ष्टुः' (अष्टाध्यायी ८.४.४१) इति सूत्रेण अष्ठि इति शब्दः निष्पाद्यते। यथा शरीरस्य बहिः स्थितस्य कोमलस्य मांसस्य चर्मणः च अन्तः कठिनं अस्थि भवति, तथैव फलस्य मध्ये कठिनम् अस्थि इव अष्ठिः भवति। अतः अष्ठिशब्दस्य बीजम् इति अर्थः। चूतशब्दस्य आम्रफलम् इति अर्थः तु प्रसिद्धः एव।

**चिपिटायित** इति शब्दः नामधातुनिष्पन्नः शब्दः। चिपिटशब्दस्य पृथुकम् इति अर्थः भवति इति पूर्वं विचारितम्। चिपिट इव आचरति इति विग्रहे 'कर्तुः क्यङ् सलोपश्च' (अष्टाध्यायी ३.१.११) इति सूत्रेण चिपिटशब्दात् क्यङ्-प्रत्ययः भवति। तत्र ककारस्य 'लशक्वतद्धिते' (अष्टाध्यायी १.३.८) ङकारस्य च 'हलन्त्यम्' (अष्टाध्यायी १.३.३) इति सूत्रेण इत्संज्ञा भवति। ततः चिपिट+य इति दशायाम् 'अकृत्सार्वधातुकयोर्दीर्घः' (अष्टाध्यायी ७.४.२५) इति सूत्रेण टकारोत्तवर्तिनः अकारस्य दीर्घः भवति। तेन चिपिटाय इति रूपं भवति। तस्य 'सनाद्यन्ता धातवः' (अष्टाध्यायी ३.१.३२) इति सूत्रेण धातुसंज्ञा भवति। ततः परं चिपिटाय-धातोः 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' (अष्टाध्यायी ३.४.७२) इति सूत्रेण कर्त्रर्थे क्त-प्रत्ययः विधीयते। तेन चिपिटायित इति रूपं सिध्यति। अस्य शब्दस्य चिपिटम् इव क्षीणम् इति अर्थः भवति।

**चण्डक्रियारुचिरखण्डितहास्यलेशा** इति पदस्य चतुर्धा व्याख्यानं सम्भवति। क्रमेण पश्यामः–

**प्रथमः पक्षः**– चण्डक्रियारुचिः अखण्डितहास्यलेशा इति प्रथमः छेदः। अस्य पक्षस्य विग्रहः पूर्वं प्रदर्शितः। देव्याः भयङ्करक्रियासु रुचिः वर्तते। पुनश्च तस्याः मुखे सर्वदा एव हास्यस्य लेशः विराजते इति तात्पर्यम्।

**द्वितीयः पक्षः**– चण्डक्रिया रुचिरखण्डितहास्यलेशा इति द्वितीयः छेदः। तत्र प्रथमं पदं चण्डक्रिया इति। चण्डा क्रिया यस्याः सा चण्डक्रिया इति बहुव्रीहिः। जगदम्बायाः महाकाल्याः क्रियाः भयङ्कर्यः भवन्ति इति कृत्वा देवी चण्डक्रिया इति उच्यते। रुचिरखण्डितहास्यलेशा इति शब्दस्य इत्थं व्याख्यानम्– रुचिरः च स खण्डितः च रुचिरखण्डितः इति कर्मधारयः। रुचिरखण्डितं च तद् हास्यं च रुचिरखण्डितहास्यम् इति कर्मधारयः। रुचिरखण्डितहास्यस्य लेशः यस्याः सा रुचिरखण्डितहास्यलेशा इति बहुव्रीहिः। देव्याः स्मितं सुन्दरं, किन्तु भयङ्करक्रियाया आचरणकाले तस्याः हास्यं खण्डितम्। तथापि तस्याः मुखे हास्यस्य लेशः राजते इति तात्पर्यम्।

**तृतीयः पक्षः**– चण्डक्रिया अरुचिरखण्डितहास्यलेशा इति तृतीयः छेदः।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





द्वितीयपक्षे यथा अर्थः तथा एव अत्र अपि भविष्यति। केवलं देव्याः हासः असुन्दरः इति प्रतीयते। देवी भयङ्करक्रियासु लिप्ता इति कृत्वा तस्याः हासः अपि क्रूरः भयानकः च। तस्मात् स हासः असुन्दरः।

**चतुर्थः पक्षः**– अत्र पूर्णः शब्दबन्धः एकम् एव पदम्। चण्डक्रियया रुचिरं चण्डक्रियारुचिरम् इति कर्मधारयः। चण्डक्रियारुचिरं च खण्डितं च चण्डक्रियारुचिरखण्डितम् इति कर्मधारयः। चण्डक्रियारुचिरखण्डितं च हास्यं च चण्डक्रियारुचिरखण्डितहास्यम् इति कर्मधारयः। चण्डक्रियारुचिरखण्डितहास्यस्य लेशः यस्याः सा चण्डक्रियारुचिरखण्डितहास्यलेशा इति बहुव्रीहिः। देव्याः चण्डक्रियायां तस्याः हास्यं खण्डितं, तथापि तस्याः मुखे रुचिरस्य हासस्य लेशः राजते इति तात्पर्यम्। किन्तु इदम् अत्र स्मर्तव्यं यत्, इदम् अखण्डं पदम् इति स्वीक्रियते चेत् नान्द्याम् अष्टौ पदानि इति यः नियमः स उल्लङ्घितः भवति।

**सामिधेनी** इति शब्दस्य समिध् इति अर्थः। समिध् इत्युक्ते यज्ञे उपयुज्यमानम् इन्धनम्।

## विशिष्टं व्याख्यानम्–

अयं श्लोकः अस्य प्रहसनस्य मङ्गलश्लोकः नान्दीश्लोकः च। अत्र कविः प्रहसनस्य निर्विघ्नपरिसमाप्तये इष्टं स्मरन् पाठकेभ्यः दर्शकेभ्यः च आशीर्वादम् अपि यच्छति। त्रिविधेषु मङ्गलेषु इदम् आशीर्वादात्मकं मङ्गलम्।

अत्र कस्याः देव्याः स्तुतिः वर्तते इति विषये विचारः प्रवर्तनीयः। कस्याश्चिद् देव्याः विशिष्टतया नामग्रहणं न कृतम् इति कारणेन अत्र विचारस्य अवकाशः वर्तते। 'गणवधूः युष्मान् पुष्णातु' इति कविः अत्र प्रार्थयते। इयं गणवधूः का? गणस्य वधूः गणवधूः इति समासे उपस्थितस्य गणशब्दस्य कः अर्थः? अस्मन्मते गणशब्दः शिवस्य वाचकः। 'गणेभ्यश्च वो गणपतिभ्यश्च वो नमः' इति यजुर्वेदे रुद्रस्य स्तुतिः सुप्रसिद्धा एव। बहुत्र श्रुतौ पुराणेषु च गणपति-गणाध्यक्ष-गणेशादि-शब्दैः भगवतः शिवस्य उल्लेखः विहितः वर्तते। एतेन शिवः एव गणशब्देन अत्र विवक्षितः इति अलं विस्तारेण। ननु कथम् अत्र 'पुष्णातु वः शिववधूः क्षणधूतवेणिः' इति साक्षाद् एव कविना न लिखितम्? गणवधूः क्षणधूत इति अनुप्रासाय कविना अत्र गणशब्दस्य एव प्रयोगः कृतः इति विभावयन्तु सहृदयाः।

गणः शिवः, तस्य वधूः महाकाली एव अत्र स्तूयते। वस्तुतः शिवपत्न्याः सती, पार्वती, दुर्गा इत्यादीनि बहूनि नामानि रूपाणि च प्रसिद्धानि। अत्र तु

महाकालीरूपा एव गणवधूत्वेन अस्माभिः स्वीक्रियते। अस्मिन् श्लोके गणवध्वाः यानि विशेषणानि उक्तानि तानि सर्वाणि महाकाल्याम् एव घटन्ते इति अत्र कारणम्। अत्र प्रथमतः त्रिषु पादेषु देव्याः यथाक्रमं रूपं, क्रिया, स्वरूपं च वर्णितम् अस्ति। प्रथमे पादे देव्याः बाह्यं रूपं वर्ण्यते। देव्याः सुन्दरं रूपम् अत्र न वर्णितम्। सा हि शुष्कमुखी। तस्याः गण्डदेशः अपुष्टः इति प्रथमे पादे वर्णितम्। भयङ्करक्रियासु रता अपि सा हसति। एतादृशेषु भयानकक्रियासु सा रुचिं वहति। तानि कुर्वती सा आनन्दिता भवति इति द्वितीये पादे। सा हि भगवतः शिवस्य शक्तिरूपिणी इति तृतीये पादे वर्तते।

देव्याः महाकाल्याः विषये इदं वर्णनं सङ्गच्छते। महाकाल्याः विषये प्रसिद्धासु कथासु देव्या भीकररूपप्रदर्शनेन भगवतः शिवस्य भायनस्य कथा मुख्यतां भजते। महाभागवतपुराणनामकस्य शाक्तस्य उपपुराणस्य अष्टमाध्याये एषा कथा विस्तरेण वर्णिता। यदा दक्षयज्ञे गमनाय सती शिवेन वारिता तदा देवी स्वीयं रूपं प्रकटयामास इति वर्णने तत्र उच्यते–

त्यक्त्वा हेमपटीम् आसीद् वृद्धावस्थासमप्रभा।
दिगम्बरा लसत्केशा ललज्जिह्वा चतुर्भुजा॥
कालानललसद्देहा स्वेदाक्तेन तनूरुहा।
महाभीमा घोररावा मुण्डमालाविभूषणा॥
उद्यत्प्रचण्डकोट्याभा चन्द्रार्धकृतशेखरा।
उद्यदादित्यसङ्काशा किरीटोज्ज्वलमस्तका॥ (५०-५२)

अत्र देव्याः वृद्धावस्था वर्णिता। वृद्धाया एव मुखं शुष्कीभवति इति प्रकृतश्लोकेन तस्य साम्यं दृश्यते। पुनश्च सा भाययति शिवम् इति तत्रैव वर्ण्यते–

शम्भुः समीक्ष्य तां देवीं क्रोधविस्फुरिताधराम्।
कालाग्नितुल्यनयनां मीलिताक्षस्तदाभवत्॥
सहसा भीमदंष्ट्रास्या साट्टहासं तदाकरोत्।
तन्निशम्य महादेवो भीतभीता विमुग्धवत्॥
कष्टेनोन्मील्य नेत्राणि तां ददर्श भयानकाम्।

शिवः क्रोधविस्फुरिताननां कालाग्नितुल्यनयनाम् अट्टहासं कुर्वतीं तां दृष्ट्वा भीतभीतः स्वनयनानि निमीलितवान् इति अत्र स्पष्टं वर्ण्यते।

पुनश्च दक्षयज्ञस्थले शिवनिन्दाम् असहमानायां सत्यां शरीरं त्यक्तवत्यां शिवः यदा वीरभद्रं दक्षयज्ञविनाशनाय प्रैषयत् तदा तेन सह देवी स्वयम् अपि भद्रकालीरूपं परिगृह्य गता इति पुराणान्तरे दृश्यते। सा भद्रकाली क्षुत्क्षामा





कोटराक्षी मसिमलिनमुखी च वर्तते इति तस्याः देव्याः ध्यानमन्त्रे वर्ण्यते। तथाहि–

क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी मुक्तकेशी रुदन्ती
नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं करोमि।
हस्ताभ्यां धारयन्ती ज्वलदनलशिखासन्निभं पाशयुग्मं
दन्तैर्जम्बूफलाभैः परिहरतु भयं पातु मां भद्रकाली॥

प्रस्तुतश्लोकस्य वर्णनेन सह देव्याः भद्रकाल्याः रूपम् अपि सादृश्यं भजते।

पुनश्च शुम्भनिशुम्भाभ्यां सह जगदम्बायाः युद्धस्य समये चण्डमुण्डवधार्थं देव्याः जगदम्बायाः मुखं क्रोधेन कृष्णवर्णम् अभवत्। तस्याः ललाटफलकाद् असिपाशहस्ता शुष्कमांसा ललज्जिह्वा काली देवी विनिर्गता। मार्कण्डेयपुराणान्तर्गते देवीमाहात्म्ये सप्तमाध्याये एषा वर्णना उपलभ्यते।

ततः कोपं चकारोच्चैर्ललाटफलकाद् द्रुतम्।
कोपेन चास्या वदनं मसीवर्णम् अभूत् तदा॥
भ्रुकुटीकुटिलात् तस्या ललाटफलकाद् द्रुतम्।
काली करालवदना विनिष्क्रान्तासिपाशिनी॥
विचित्रखट्वाङ्गधरा शिरोमालाविभूषणा।
द्वीपिचर्मपरीधाना शुष्कमांसातिभैरवा॥
अतिविस्तारवदना जिह्वाचलनभीषणा।
निमग्ना रक्तनयना नादापूरितदिङ्मुखा॥ ( ५-८)

एवं विविधग्रन्थेषु विविधप्रकरणेषु देव्याः काल्याः यद् वर्णनम् उपलभ्यते तेन ज्ञायते यत् एषा काली देवी एव दर्शनेन क्रियया च भयङ्करी। सा एव च भगवतः शिवस्य शक्तिस्वरूपिणी। अत्र अस्मिन् श्लोके तस्याः महाकाल्याः एव वर्णनम् उपलभ्यते।

इदम् अपि अत्र अवधेयं यत् कविः अस्मिन् नाटके देव्याः त्रयाणां रूपाणां स्तुतिं विधत्ते। भरतवाक्ये तावत् देव्याः लक्ष्म्याः सरस्वत्याः च उल्लेखं कुरुते तयोः आशीर्वादं च प्रार्थयते। तन्त्रपुराणादिषु देव्याः त्रीणि रूपाणि प्रकल्प्यन्ते। तानि च महाकाली, महालक्ष्मीः, महासरस्वती। अत्र भरतवाक्ये महालक्ष्म्याः महासरस्वत्याः च प्रार्थनेन अपि इदं दृढं भवति यत् कविः महाकाल्याः अपि स्तुतिं कुर्यात्। सा च स्तुतिः अत्र नान्दीश्लोके विहिता इति देव्याः रूपत्रयस्य वर्णनम् आराधनं च कविना अत्र विहितम् इति सुधियः विभावयन्तु।

वस्तुतः, मङ्गलश्लोके कविः सम्पूर्णस्य काव्यस्य वर्ण्यमानविषयस्य

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

दिग्दर्शनं कारयति इति परम्परा। अत्र श्लोके अपि सुन्दरेण कौशलेन विद्वन्मनोरमतया कविः प्रस्तुतस्य प्रहसनस्य सर्वं विषयजातं वर्णितवान् एव इति सहृदयानां न दृगगोचरं स्यात्।

नाटके पत्न्याः रङ्गिण्याः चेष्टया कपालिनः कल्याणं भवति। सा रङ्गिणी तान्त्रिकम् आनाय्य कपालिनं वञ्चयित्वा एव तम् आनन्दयति। कृपणः कपाली छत्रोपानहोः नाशेन, शुनकदंशनेन च पीडितः आसीत्। पुनः पङ्गुरामः अन्यस्य सकाशात् पादुकाम् आनीय तस्य अपयशः अपि सम्पादितवान् आसीत्। इत्थं दुःखे निमग्नः कपाली नष्टं सुवर्णं पुनः प्रतिवेशिभ्यः लब्ध्वा आनन्दम् अलभत।

कपाली रङ्गिणीं सम्बोधयति 'चूताष्ठिलम्बचिबुके' इति। देवी च वर्णिता 'चूताष्ठितुल्यचिपिटायितगण्डदेशा' इति। पुनश्च कपाली रङ्गिणीं विशेषयति 'ललज्जिह्वा' इति पदेन। देव्याः महाकाल्याः ललज्जिह्वात्वं सुप्रसिद्धम् एव। एताभ्यां पदाभ्यां रङ्गिण्याः तादृशम् एव रूपं वर्णितं यद् रूपं देव्याः महाकाल्याः नान्दीश्लोके वर्णितम् अस्ति। देव्याः अपरं विशेषणम् अत्र 'क्षणधूतवेणिः' इति। चिपिटकचर्वणव्रतं यदा तान्त्रिकेण प्रस्तुतं तदा रङ्गिणी 'सवेणीकं शिरश्चालयन्ती' तद् निराकरोत्। अतः इदं विशेषणम् अपि रङ्गिण्याः विषये सार्थकं भवति। पुनश्च रङ्गिणी यद् यद् अपि करोति तेन कपाली न सन्तुष्यति। अन्ततो गत्वा रङ्गिण्याः क्रियाभिः तस्य आनन्दः जायते चेद् अपि कदाचिद् अपि रङ्गिण्याः क्रियासु तस्य सन्तुष्टिः नास्ति। यथा भगवान् शिवः देव्याः सत्याः क्रियाभिः भयभीतः मोहितः च जातः आसीत्। कपाली अपि तान्त्रिकेण अहिफेनमिश्रं पानीयं पीत्वा मोहितः जातः आसीत्। इदं परोक्षतः रङ्गिण्याः क्रियया एव अभवत्। कपाली यदा यदा रङ्गिणीं पश्यति तदा तदा एव कुपितः भवति। अतः कपालिनः क्रोधस्य कारणरूपिणी रङ्गिणी। यथा भगवतः शिवस्य क्रोधकारणम् अभवत् देवी सती। इत्थं प्रकृतप्रहसनस्य विषयाः सूक्ष्मतया अत्र श्लोके ध्वनिताः सन्ति। तथा च अत्र तृतीयपादे शिवस्य नामरूपेण कपाली इति शब्दस्य उच्चारणं, तस्य कुप्यत् इति विशेषणदानेन तस्य कोपनस्वभावस्य सूचनं च कविना विहितम्। प्रहसने च सदा क्रोधशीलस्य नायकस्य नाम कपाली इति एव प्रदत्तम् इति स्पष्टम् अत्र नायकचरितस्य ध्वननम् अपि समवगच्छन्ति एव सुधियः।

साहित्यदर्पणे (४/२५) उक्तं यत्, नान्दी अष्टपदा द्वादशपदा वा भवेत्। अत्र अष्टपदा नान्दी दृश्यते। प्रथमतृतीयचरणयोः एकैकं पदं, द्वितीये पादे द्वे पदे, चतुर्थे चरणे च चत्वारि पदानि इति अष्टौ पदानि अत्र नान्दीश्लोके। अस्यां नान्द्यां

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





देव्याः प्रशंसया तस्याः स्तुतिः तथा पुष्णातु इति आशीर्वचनम् अपि विद्यते। अत्र कपाली इत्यादिभिः शब्दैः श्लेषेण तथा प्रस्तुतायाः महाकाल्याः व्यवहारान् रङ्गिण्याम् अप्रस्तुतायाम् आरोपितम् इति समासोक्तिः अपि वर्णयितुं शक्यते। श्लेषेण समासोक्त्या च अभिधेयस्य वस्तुनः वर्णनाद् अत्र पत्रावली नान्दी इति अस्माकं मतिः।

**छन्दः–**

वसन्ततिलका इति वृत्तेन रचितः अयं श्लोकः। वसन्ततिलकावृत्तस्य लक्षणं छन्दोमञ्जरीग्रन्थे इत्थं निगदितम्– **ज्ञेयं वसन्ततिलकं तभजा जगौ गः** इति। वृत्तरत्नाकरे तु तस्य वृत्तस्य लक्षणं– **उक्ता वसन्ततिलका तभजा जगौ गः** इति। इदं समवृत्तम्। अतः चतुर्षु अपि पादेषु समाना एव गणव्यवस्था वर्तते। अत्र एकस्य पादस्य गणविभागं वयं प्रदर्शयामः–

| त | | | भ | | | ज | | | ज | | | ग | ग |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ऽ | ऽ | । | ऽ | । | । | । | ऽ | । | । | ऽ | । | ऽ | ऽ |
| चू | ता | ष्ठि | तु | ल्य | चि | पि | टा | यि | त | ग | ण्ड | दे | शा |

**अलङ्काराः–**

अस्मिन् श्लोके नैके अलङ्काराः सन्ति। प्रथमतः शब्दालङ्कारान् विवेचयामः।

**वृत्त्यनुप्रासः–** चूत, चिपिटायित, चण्ड, रुचिर इति शब्देषु चकारस्य; कुप्यत्, कपालि इत्यादिषु शब्देषु ककारस्य; नयनानलसामिधेनी इति शब्दे नकारस्य; पुष्णातु, गणवधूः, क्षण इत्यादिशब्देषु णकारस्य असकृद् आवृत्त्या अत्र वृत्त्यनुप्रासः।

**श्रुत्यनुप्रासः–** ट-ठ-ड-ण-ष-काराणां (चूताष्ठि, चिपिटायित, गण्ड, चण्ड, खण्डित, पुष्णातु इत्यादिशब्देषु); क-ख-ग-ह-काराणां ; च-श-काराणां च प्रयोगात् श्रुत्यनुप्रासः।

**अन्त्यानुप्रासः–** देशा लेशा इति पादयोः अन्ते समानवर्णसत्त्वात् अन्त्यानुप्रासः।

**छेकानुप्रासः–** ण्ड इति व्यञ्जनसङ्घातस्य (गण्ड, चण्ड इत्यत्र); कुप्यत्-कपालि इत्यत्र ककारपकारयोः आवृत्त्या छेकानुप्रासः च वर्तते।

**शब्दालङ्कारसङ्करः–** अत्र एते सर्वेऽपि अलङ्काराः समानेषु पदेषु वर्तमानैः वर्णैः एव प्रवर्तन्ते इति कृत्वा पृथक् कर्तुं न शक्यन्ते। तस्मात् अत्र एतेषां सङ्करः

वर्तते।

**श्लेषः–** अत्र तृतीयपादे उच्चारितशब्दस्य बहुधा व्याख्यानसम्भवात् अत्र श्लेषालङ्कारः अपि वर्तते।

अथ अर्थालङ्काराः अपि सन्ति अत्र–

**उपमा–** प्रथमपादे चूताङ्घिगण्डदेशयोः सादृश्यं वर्णितम् अस्ति। अत्र उपमावाचकस्य तुल्यशब्दस्य अपि प्रयोगः वर्तते। तेन अत्र उपमालङ्कारः अस्ति। चूताङ्घिः अत्र उपमानं, गण्डदेशः उपमेयः, तुल्य इति शब्दः सादृश्यवाचकः, चिपिटायितत्वं सामान्यधर्मः इति चतुर्णाम् अपि स्पष्टतया उल्लेखाद् अत्र पूर्णोपमाऽलङ्कारः।

**रूपकम्–** तृतीयपादे क्रुद्धस्य महादेवस्य नेत्राग्नेः समिद्रूपेण गणवध्वाः वर्णनाद् रूपकालङ्कारः। अत्र गणवध्वाम् एव इन्धनत्वम् आरोपितम्।

**संसृष्टिः–** परस्परनिरपेक्षतया उपमा-रूपक-विरोधाभासानां सत्त्वाद् अत्र त्रयाणां संसृष्टिः वर्तते।

**अलङ्कारध्वनिः–** अत्र देव्याः मुखम् आम्रस्य बीजम् इव इति वर्णनात् देव्याः अपुष्टता ध्वन्यते। सा अपुष्टा देवी वः पुष्णातु इति च कथितम्। पुनश्च सा चण्डक्रियायां रुचिशीला चेद् अपि युष्माकं कल्याणं विदधातु। चण्डक्रियायां रुचिमती सती कल्याणकारिणी इति कल्पनात् अत्र विरोधाभासालङ्कारः ध्वन्यते। अत्र साक्षात् अभिधया देव्याः अपुष्टता नोक्ता इति विरोधाभासस्य ध्वनिः।

एतद् व्यतिरिच्य श्लेषः समासोक्तिः च पूर्वं व्याख्यातम्।





## भरतवाक्यम्

कृपणा विदुषे कृपार्पणे
कमला पङ्कभवाङ्कशोभिनी।
सरसा भवतात् सरस्वती-
प्रियसूनुष्वपहाय वैरिताम्॥

**अन्वयः–**

विदुषे कृपार्पणे कृपणा पङ्कभवाङ्कशोभिनी कमला सरस्वतीप्रियसूनुषु वैरिताम् अपहाय सरसा भवतात्।

**पदपरिचयः–**

**विदुषे**– [√विद ज्ञाने+शतृ] (विद्वस्, चतुर्थ्याम् एकवचने)

**कृपार्पणे**– [कृपायाः अर्पणं कृपार्पणम् (षष्ठीतत्पुरुषः), √ऋ गतौ+णिच्+ल्युट् अर्पण] (कृपार्पण, सप्तम्याम् एकवचनम्)

**कृपणा**– [कृपण+टाप्] (कृपणा, प्रथमायाम् एकवचने)

**पङ्कभवाङ्कशोभिनी**– [पङ्के भवः यस्य तत् पङ्कभवम् (बहुव्रीहिः), √भू सत्तायाम्+अप्=भव, पङ्कभवस्य अङ्कः पङ्कभवाङ्कः (षष्ठीतत्पुरुषः), पङ्कभवाङ्के शयितुं शीलम् अस्य पङ्कभवाङ्कशायिनी (उपपदतत्पुरुषः), पङ्कभवाङ्के-√शीङ् स्वप्ने+णिनि=पङ्कभवाङ्क-शायिन्। पङ्कभवाङ्कशायिन्+ङीप्=पङ्कभवाङ्कशायिनी] (पङ्कभवाङ्क-शायिनी, प्रथमायाम् एकवचनम्)

**कमला**– (कमला, प्रथमायाम् एकवचनम्)

**सरस्वतीप्रियसूनुषु**– [प्रियः च स सूनुः च प्रियसूनुः (कर्मधारयः), सरस्वत्याः प्रियसूनुः सरस्वतीप्रियसूनु (षष्ठीतत्पुरुषः)] (सरस्वतीप्रियसूनु, सप्तम्यां बहुवचनम्)

**वैरिताम्**– [वैरिन्+तल्=वैरित, वैरित+टाप्=वैरिता] (वैरिता, द्वितीयायाम् एकवचनम्)

**अपहाय**– (अप-√ओहाक् त्यागे+ल्यप्)

**सरसा**– [रसेन सह वर्तते सरसा (बहुव्रीहिः), सरस+टाप्=सरसा] (सरसा, प्रथमायाम् एकवचनम्)

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek

**भवतात्**– (√भू सत्तायाम्, आशिषि लोटि मध्यमपुरुषे एकवचनम्)

**पदार्थाः-**

| | |
|---|---|
| विदुषे | पण्डिताय |
| कृपार्पणे | कृपादाने |
| कृपणा | व्यये दाने च कातरा |
| कमला | लक्ष्मीः |
| सरस्वतीप्रियसूनुषु | सरस्वत्याः ईप्सितेषु पुत्रेषु |
| वैरिताम् | शत्रुताम् |
| अपहाय | त्यक्त्वा |
| सरसा | प्रसन्ना |
| भवतात् | भूयात् |

**सरलार्थः-**

सरस्वत्याः प्रियाः पुत्राः ये पण्डिताः सन्ति तेषु भगवती कमलालया लक्ष्मीः कृपादाने कुण्ठिता भवति। सा कमलालया लक्ष्मीः सरस्वत्या सह स्वस्याः शत्रुतां विस्मृत्य पण्डितेषु प्रसन्ना भूयात्।

**विशिष्टशब्दानां विवेचनम्-**

**पङ्कभवाङ्कशायिनी** इति शब्दस्य कमलालया इति अर्थः। भवः इति शब्दस्य जन्म उत उद्भवः इति अर्थः। पङ्के भवः जन्म यस्य तत् पङ्कभवम् इति बहुव्रीहिसमासः। पद्मं पङ्के उत्पद्यते इति कृत्वा पङ्कभवं पद्मम्। पङ्कभवस्य अङ्कः पङ्कभवाङ्कः। अङ्कशब्दस्य क्रोडः अर्थः। पङ्कभवाङ्के शयितुं शीलम् अस्याः इति विग्रहे 'सुप्यजातौ णिनिस्ताच्छील्ये' (अष्टाध्यायी ७.२.७८) इति सूत्रेण पङ्कभवाङ्के इति सुबन्ते उपपदे √शीङ् स्वप्ने इति धातोः ताच्छील्यविशिष्टकर्त्रर्थे णिनि-प्रत्ययः क्रियते। ततः पङ्कभवाङ्कशायिन् इति प्रातिपदिकं निष्पाद्यते। ततः स्त्रीत्वे द्योत्ये 'ऋन्नेभ्यो ङीप्' (अष्टाध्यायी ४.१.५) इति सूत्रेण पङ्कभवाङ्कशायिन् इति शब्दात् ङीप्-प्रत्यये पङ्कभवाङ्कशायिनी इति शब्दस्य निष्पत्तिः। कमलवने निवसति इति कृत्वा कमलालया इति देव्याः लक्ष्म्याः नामान्तरम्।

**वैरिता** इति शब्दस्य अर्थः शत्रुता। वैरम् अस्य अस्ति इति विग्रहे वैरशब्दात् 'अत इनिठनौ' (अष्टाध्यायी ५.२.११५) इति सूत्रेण इनि-प्रत्यये वैरिन् इति शब्दः जायते। ततः वैरिणः भावः इति विग्रहे 'तस्य भावस्त्वतलौ' (अष्टाध्यायी





५.१.११९) इति सूत्रेण तल्-प्रत्यये 'नस्तद्धिते' (अष्टाध्यायी ६.४.१४४) इति सूत्रेण नकारस्य लोपे वैरित इति शब्दः जायते। तल्-प्रत्ययान्ताः शब्दाः स्त्रियाम् एव प्रयुज्यन्ते इति नियमेन वैरित-शब्दात् 'अजाद्यतष्टाप्' (अष्टाध्यायी ४.१.४) इति सूत्रेण टाप्-प्रत्यये वैरिता इति।

**विशिष्टं व्याख्यानम्-**

लक्ष्मीसरस्वत्योः परस्परं वैरं पुराणेषु प्रसिद्धम्। लक्ष्मीः सरस्वती गङ्गा च तिस्रः अपि भगवतः विष्णोः भार्याः। कस्मिंश्चित् प्रसङ्गे सरस्वती लक्ष्म्यां गङ्गायां च ईर्ष्यालुः भूत्वा ते शप्तवती इति देवीभागवतपुराणस्य नवमस्कन्धस्य षष्ठाध्याये वर्णितम्। सरस्वत्याः शापेन लक्ष्मीः तुलसीवृक्षरूपेण गङ्गा च नदीरूपेण मर्त्यम् अवतीर्णे। गङ्गायाः च शापेन सरस्वती अपि नदीरूपतां प्राप्तवती।

इत्थं लक्ष्म्याः सरस्वत्याः च वैरं पुराणप्रसिद्धम्। अतः एवं लोके प्रसिध्यति यत्, यस्मिन् विद्यादात्री भगवती सरस्वती प्रसन्ना भवति नहि तस्मिन् सम्पदः देव्याः भगवत्याः लक्ष्म्याः कृपा वर्षति। यस्मिन् च लक्ष्मीः कृपालुः भवति नहि तस्मिन् भगवती सरस्वती अनुग्रहं करोति। सरलतया वक्तव्यं चेत्, यः लक्ष्म्याः कृपया सम्पच्छाली भवति, न स विद्याम् अधिगच्छति। यश्च विद्यया समृद्धः भवति न स धनिकः भवति। एवम् अपि श्रूयते यत्, लक्ष्मीः विद्यावतः शप्तवती।

कविः भरतवाक्ये पुराणादिप्रसिद्धम् एतत् तत्त्वं संस्मारयन् प्रार्थयते यत्, सरस्वत्या वैरवशात् सरस्वत्याः प्रियेषु पुत्रेषु पण्डितेषु कृपादाने कृपणा देवी लक्ष्मीः सरस्वत्यां वैरं विस्मृत्य विद्वत्सु अकुण्ठितं कृपां वर्षतु।

भगवत्याः आदिशक्तेः रूपत्रयं पुराणेषु वर्णितं– महालक्ष्मीः, महासरस्वती, महाकाली च। नान्दीश्लोके देव्याः महाकाल्याः स्तुत्या प्रारब्धं प्रहसनं भरतवाक्ये महालक्ष्म्याः महासरस्वत्याः स्तवनेन समाप्तिं गच्छति। भगवत्याः आदिशक्तेः त्रयाणां रूपाणाम् अर्चनम् अस्मिन् प्रहसने कविना कृतम्।

**छन्दः-**

सुन्दरी इति वृत्तेन रचितः अयं श्लोकः। इदं वृत्तम् अर्धसमवृत्तम्। अस्मिन् वृत्ते प्रथमे तथा तृतीये पादे समाना गणव्यवस्था तथा च द्वितीये चतुर्थे च चरणे समाना गणव्यवस्था भवति। सुन्दरीवृत्तस्य लक्षणं छन्दोमञ्जरीग्रन्थे इत्थं निगदितम्– **अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा** इति। अत्र प्रथमतृतीयपादयोः सगणद्वयात् परं जगणः अन्ते च एकः गुरुः इत्थं क्रमेण

Kavikulguru Kalidas Sanskrit University Ramtek Collection

दश वर्णाः भवन्ति। द्वितीयचतुर्थपादयोः सगणात् परं भगणः, ततः च रगणः, ततः एकः लघुः एकः गुरुः च इति क्रमेण एकादश वर्णाः भवन्ति। गणव्यवस्था इत्थम्–

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| प्रथमपादः | स | | | स | | | ज | | | ग | |
| | । | । | ऽ | । | । | ऽ | । | ऽ | । | ऽ | |
| | कृ | प | णा | वि | दु | षे | कृ | पा | र्प | णे | |
| द्वितीयपादः | स | | | भ | | | र | | | ल | ग |
| | । | । | ऽ | ऽ | । | । | ऽ | । | ऽ | । | ऽ |
| | क | म | ला | प | ङ्क | भ | वा | ङ्क | शा | यि | नी |
| तृतीयपादः | स | | | स | | | ज | | | ग | |
| | । | । | ऽ | । | । | ऽ | । | ऽ | । | ऽ | |
| | स | र | सा | भ | व | तात् | स | र | स्व | ती | |
| चतुर्थपादः | स | | | भ | | | र | | | ल | ग |
| | । | । | ऽ | ऽ | । | । | ऽ | । | ऽ | । | ऽ |
| | प्रि | य | सू | नु | ष्व | प | हा | य | वै | रि | ताम् |

**अलङ्काराः–**

**अतिशयोक्तिः–** अत्र विद्वांसः उपमेयाः, सरस्वतीप्रियसूनवः उपमानानि। यथा सरस्वतीप्रियसूनुषु लक्ष्म्याः कृपणता तथैव विद्वत्सु इति उपमायाः तात्पर्यम्। अत्र तु सरस्वतीप्रियसूनुत्वं विद्वत्सु आरोपितम्। सरस्वतीप्रियसूनुत्वेन विद्वत्सु लक्ष्म्याः कार्पण्यम् उक्तं भवति। एवं च उपमानवाचकेन उपमेयवाचकस्य निगरणात् अत्र अतिशयोक्तिः।

**काव्यलिङ्गम्–** लक्ष्म्याः विद्वत्सु कृपणतायां सरस्वती-प्रियसूनुत्वं कारणत्वेन व्यज्यते। तस्माद् अत्र काव्यलिङ्गम्।

**सङ्करः–** अतिशयोक्ति-काव्यलिङ्गयोः समानपदैः वर्णनात् अपृथग्योग्यतया अत्र तयोः सङ्करः दृष्टव्यः।





## अन्ये श्लोकाः

कोजागरे चिपिटचर्वणकर्मणा त्वं
पर्वप्रभाववशतो वसुपर्वतः स्याः।
विद्यालवेन रहितोऽपि भवेः समृद्धः
श्रेष्ठी यथैष चपलः कृपणः कपाली॥

**अन्वयः–**

त्वं कोजागरे चिपिटचर्वणकर्मणा पर्वप्रभाववशतः वसुपर्वतः स्याः। विद्यालवेन रहितः अपि समृद्धः भवेः। यथा एषः चपलः कृपणः श्रेष्ठी कपाली।

**पदपरिचयः–**

त्वं– (युष्मद्, प्रथमायाम् एकवचनम्)
कोजागरे– (कोजागर, सप्तम्याम् एकवचनम्)
चिपिटचर्वणकर्मणा– [चिपिटस्य चर्वणं चिपिटचर्वणम् (षष्ठीतत्पुरुषः)। चिपिटचर्वणम् एव कर्म चिपिटचर्वणकर्म (कर्मधारयः)] (चिपिटचर्वणकर्मन्, तृतीयायाम् एकवचनम्)
पर्वप्रभाववशतः– [पर्वणः प्रभावः पर्वप्रभावः (षष्ठीतत्पुरुषः)। पर्वप्रभावस्य वशः पर्वप्रभाववशः (षष्ठीतत्पुरुषः)।] (पर्वप्रभाववश+तसिल्, अव्ययम्)
वसुपर्वतः– [वसुनः पर्वतः वसुपर्वतः (षष्ठीतत्पुरुषः)।] (वसुपर्वत, प्रथमायाम् एकवचनम्)
स्याः– (√अस भुवि; विधिलिङि मध्यमपुरुषस्य एकवचनम्)
विद्यालवेन– [विद्याया लवः विद्यालवः (षष्ठीतत्पुरुषः)।] (विद्यालव, तृतीयायाम् एकवचनम्)
रहितः– [√रह त्यागे+क्त] (रहित, पुंसि प्रथमायाम् एकवचनम्)
अपि– (अव्ययम्)
समृद्धः– [सम्-√ऋधु वृद्धौ+क्त] (समृद्ध, पुंसि प्रथमायाम् एकवचनम्)
भवेः– (√भू सत्तायाम्; विधिलिङि मध्यमपुरुषे एकवचनम्)
यथा– (अव्ययम्)
एषः– (एतत्, पुंसि प्रथमायाम् एकवचनम्)
चपलः– (चपल, प्रथमायाम् एकवचनम्)
कृपणः– (कृपण, प्रथमायाम् एकवचनम्)
श्रेष्ठी– (श्रेष्ठिन्, प्रथमायाम् एकवचनम्)

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.

कपाली– (कपालिन्, प्रथमायाम् एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| त्वम् | त्वम् |
| कोजागरे | कोजागरोत्सवे |
| चिपिटचर्वणकर्मणा | चिपिटकस्य भक्षणरूपेण कर्मणा |
| पर्वप्रभाववशतः | तिथेः प्रभावेण |
| वसुपर्वतः | महाधनिकः |
| स्याः | भवेः |
| विद्यालवेन | विद्यायाः लेशेन |
| रहितः | हीनः |
| अपि | अपि |
| समृद्धः | वित्तशाली |
| भवेः | भवेः |
| यथा | यथा |
| एषः | अयम् |
| चपलः | चञ्चलः |
| कृपणः | व्ययकातरः |
| श्रेष्ठी | वणिक् |
| कपाली | कपालिनामा जनः |

**सरलार्थः–**

त्वं कोजागरदिवसे नारिकेलमिश्रचिपिटकस्य भक्षणेन धनस्य पर्वतं लभस्व। त्वं विद्याहीनः सन् अपि अतीव समृद्धः भव। यथा अयम् आगच्छन् चञ्चलः कृपणः वणिक् कपाली अभवत्।

**विशिष्टं व्याख्यानम्–**

विदूषकं प्रति सूत्रधारस्य इदं वचनम्। यदा विदूषकः कथितवान् यत् पत्नी तेन बलेन नारिकेलमिश्रं चिपिटकं खादितवती अस्ति इति तदा तस्य लाभं वर्णयन् सूत्रधारः इमं श्लोकं कथयति। अनेन श्लोकेन च मुख्यप्रहसनस्य प्रस्तावं

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





करोति।

इमां प्रथां पुरस्कृत्य कविः अस्मिन् श्लोके सूत्रधारस्य मुखेन कथयति यत्, “हे विदूषक! त्वं मूर्खः। किन्तु तव भार्या अतीव विचक्षणा। तस्याः अनुग्रहात् त्वम् अद्य कोजागरकृत्ये नारिकेलोदकं चिपिटकं च भक्षितवान् असि। तेन देव्याः कमलायाः प्रसादेन प्रभूतं धनं लभस्व। अयम् आगच्छन् कपाली अपि त्वम् इव विद्याहीनः। किन्तु सोऽपि गृहिण्याः अनुग्रहाद् एव कल्याणम् अलभत।”

कोजागरपर्वणि नारिकेलोदक-चिपिटकयोः भक्षणम् एव सौभाग्योदयस्य कारणम् इति सूचयन् कविः पर्वप्रभाववशतः इति पदं प्रयुक्तवान् अस्ति। अनेन श्लोकेन वस्तुतः नाटकस्य प्रस्तावना विहिता। “एष कपाली” इति पुरोवर्तित्वसूचकेन एष इति पदेन नाटकस्य प्रस्तावः सूत्रधारेण विहितः।

अस्मिन् श्लोके बहूनि मुखसन्ध्यङ्गानि वर्तन्ते इति नाट्यतत्त्वगतविचारणप्रसङ्गे निरूपितम् अस्माभिः।

**छन्दः अलङ्कारः च–**

अस्मिन् श्लोके वसन्ततिलकावृत्तम्। तस्य वृत्तस्य लक्षणादि पूर्वं विचारितम् एव। तदनुसारेण अत्र अपि ज्ञेयम्।

**वृत्त्यनुप्रासः–** चकारस्य, पकारस्य, वकारस्य, लकारस्य, णकारस्य च असकृद् आवृत्त्या वृत्त्यनुप्रासः

**यमकम्–** पर्व इति सम्पूर्णस्य स्वरव्यञ्जनसमुदायस्य आनुपूर्वीम् अनुसृत्य आवृत्त्या यमकम्।

**उपमा–** श्रेष्ठिना कपालिना सह विदूषकस्य उपमा प्रदत्ता। अत्र पूर्णोपमा अस्ति।

**रूपकम्–** वसुपर्वतः इति विदूषके पर्वतत्वारोपात् रूपकं ज्ञेयम्।

**अतिशयोक्तिः–** वसुनः पर्वतः असम्भवः। तादृशस्य असम्भवस्य कल्पनं कृतम् इति कृत्वा असम्बन्धे सम्बन्धः कल्पितः। तस्माद् अत्र अतिशयोक्तिः।

**संसृष्टिसङ्करौ–** अत्र सर्वेषाम् अलङ्काराणां पृथक्करणयोग्यतया संसृष्टिः वर्तते।

पितामहस्मृतिपूतं
निधिभूतञ्च मम तातपादानाम्।
छिद्रशतभूषितम् इदं
दूषितम् इव पथि परित्यक्तम्॥

**अन्वयः-**

पितामहस्मृतिपूतं मम तातपादानां निधिभूतं छिद्रशतभूषितं च इदं दूषितम् इव पथि परित्यक्तम्।

**पदपरिचयः-**

पितामहस्मृतिपूतं- [पितामहस्य स्मृतिः, पितामहस्मृतिः (षष्ठीतत्पुरुषः)। पितामहस्मृत्या पूतं पितामहस्मृतिपूतम् (तृतीयातत्पुरुषः)। √पूङ् पवने+क्त=पूत] (पितामहस्मृतिपूत, प्रथमायाम् एकवचनम्)
मम- (अस्मद्, षष्ठ्याम् एकवचने)
तातपादानां - [पूज्यः तातः, तातपादः (कर्मधारयः)।] (तातपाद, षष्ठ्यां बहुवचनम्)
निधिभूतं- [निधिः भूतः निधिभूतः (कर्मधारयः) √भू सत्तायाम्+क्त=भूत] (निधिभूत, प्रथमायाम् एकवचनम्)
छिद्रशतभूषितं- [छिद्राणां शतं छिद्रशतम् (षष्ठीतत्पुरुषः), छिद्रशतेन भूषितम् (छिद्रशतभूषितम्)। √भूष अलङ्कारे+क्त=भूषित] (छिद्रशतभूषित, प्रथमायाम् एकवचनम्)
च- (अव्ययम्)
इदं- (इदम्, नपुंसके प्रथमायाम् एकवचनम्)
दूषितम्- [√दुष वैकृत्ये+णिच्+क्त=दूषित] (दूषित, नपुंसके प्रथमायाम् एकवचनम्)
इव- (अव्ययम्)
पथि- (पथिन्, सप्तम्याम् एकवचनम्)
परित्यक्तम्- [परि-√त्यज हानौ+क्त=परित्यक्] (परित्यक्त, नपुंसके प्रथमायाम् एकवचनम्)

**पदार्थाः-**

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.





| | |
|---|---|
| पितामहस्मृतिपूतं | पितामहस्य स्मृत्या पवित्रम् |
| मम | मे |
| तातपादानां | पितृपादानां |
| निधिभूतं | सम्पद्भूतं |
| छिद्रशतभूषितं | असङ्ख्येयच्छिद्रैः परिपूर्णं |
| च | उत |
| इदं | एतत् |
| दूषितम् | वर्ज्यम् |
| इव | इव |
| पथि | मार्गे |
| परित्यक्तम् | त्यक्तम् |

**सरलार्थः-**

पितामहस्य स्मृत्या पवित्रं, मम जनकपादानां निधिस्वरूपं, शतेन च्छिद्रैः परिपूर्णम् इदं छत्रं वर्ज्यम् इव मार्गे पातितम्।

**विशिष्टशब्दस्य विवेचनम्-**

**तातपादानाम्** इति शब्दः कर्मधारयसमासनिष्पन्नः। अत्र पादशब्दः सम्मानसूचकः। पादशब्दस्य प्रशंसार्थे समासस्य उत्तरपदत्वेन एव प्रयोगः भवति। अत्र 'प्रशंसावचनैश्च' (अष्टाध्यायी २.१.६६) इति सूत्रेण समासः क्रियते। प्रशंसावाचकशब्दैः सह समर्थस्य सुबन्तस्य समासः भवति इति अ स्य सूत्रस्य अर्थः। अयं नित्यसमासः। तेन प्रशंसावाचकशब्दः यः समासे प्रयुज्यते तेन शब्देन विग्रहः न सम्भवति। अत्र तु पूज्यः पिता इति विग्रहे पूज्यवाचकेन पादशब्देन पितृशब्दस्य समासः क्रियते। अत्र प्रशंसावाचकशब्दः सर्वदा उत्तरपदत्वेन एव प्रयुज्यते।

**विशिष्टं व्याख्यानम्-**

अयं श्लोकः कपालिना उच्यते। स मार्गे स्वस्य पुरातनं जीर्णं च च्छत्रं पतितं दृष्ट्वा क्रुद्धः सन् छत्रस्य प्रशंसां कुर्वन् इदं कथयति। तस्य पितामहः इदं छत्रम्

उपयुक्तवान्। अतः इदं छत्रं पितामहस्य स्मृतिं वहति। तस्य पिता अपि च्छत्रम् इदम् उपयुक्तवान्। तस्य पिता इदं छत्रम् अमूल्यरत्नम् इव पश्यति स्म। तत् छत्रं बहुभिः छिद्रैः पूर्णम् अस्ति। तादृशं छत्रं मार्गे वर्ज्यम् इव कोऽपि क्षिप्तवान्। एतत् दृष्ट्वा कपाली क्रुद्धः दुःखितः च भवति।

**छन्दः-**

इदम् आर्याछन्दसा निबद्धं पद्यम्। आर्याछन्दः मात्राछन्दः। तस्य लक्षणं श्रुतबोधे इत्थं कथितम्-

**यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।**
**अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या॥**

प्रथमतृतीयपादयोः द्वादशमात्राः भवन्ति। द्वितीयपादे अष्टादशमात्राः तथा चतुर्थपादे पञ्चदश मात्राः भवन्ति चेत् आर्या छन्दः भवति। प्रकृतश्लोकस्य छन्दोविनिर्णयं पश्यामः।

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | १ | २ | १ | १ | २ | २ | | | | | १२ |
| पि | ता | म | ह | स्मृ | ति | पू | तं | | | | | |
| १ | १ | २ | २ | १ | १ | १ | २ | १ | २ | २ | २ | १८ |
| नि | धि | भू | त | ञ्च | म | म | ता | त | पा | दा | नाम्। | |
| २ | १ | १ | १ | २ | १ | १ | १ | २ | | | | १२ |
| छि | द्र | श | त | भू | षि | त | मि | दं | | | | |
| २ | १ | १ | १ | १ | १ | १ | १ | २ | २ | २ | | १५ |
| दू | षि | त | मि | व | प | थि | प | रि | त्य | क्तम् | | |

**अलङ्काराः-**

शब्दालङ्काराः अत्र इत्थम्-

**वृत्त्यनुप्रासः-** तकारस्य असकृद् आवृत्त्या वृत्त्यनुप्रासः।

**श्रुत्यनुप्रासः-** त-थ-द-ध-न-स-काराणां प्रयोगात् श्रुत्यनुप्रासः।

**छेकानुप्रासः-** षितम् (भूषितमिदं दूषितमिव इत्यत्र) इत्यस्य द्विः आवृत्त्या छेकानुप्रासः वक्तव्यः।

अथ अर्थालङ्काराः अत्र इत्थम्-

**उपमा-** छत्रम् उपमेयम्, दूषितं (दूषितं यत् किमपि द्रव्यम्) उपमानं, इव इति सादृश्यद्योतकः शब्दः, पथि परित्यक्तम् इति साधारणधर्मः अत्र शब्दैः उक्तः इति कृत्वा अत्र पूर्णोपमा वर्तते।





**रूपकम्-** निधिभूतम् इति पदेन छत्रे निधित्वारोपेण रूपकम् अपि अत्र वर्तते।

**पर्यायः-** एकम् एव च्छत्रं भिन्ने भिन्ने कालखण्डे भिन्ने भिन्ने आधारे पितामहे, पितरि, स्वस्मिन्, पथि च आश्रितम् इति कृत्वा अत्र पर्यायः अपि कल्पयितुं शक्येत।

**स्वभावोक्तिः-** छत्ररूपस्य वस्तुनः यथावद् वर्णनात् इह स्वभावोक्तिः अपि कल्पयितुं शक्यते।

**संसृष्टिः-** समेषाम् अपि अलङ्काराणाम् अत्र संसृष्टिः वर्तते।

अत्र प्रथमपादद्वयेन छत्रस्य प्राचीनता ध्वन्यते। तथैव तृतीयपादेन तस्य जीर्णता ध्वन्यते। कविः प्रकृतश्लोकेन तदेव प्रधानतया वर्णयितुम् इच्छति इति कारणेन अत्र संलक्ष्यक्रमः वस्तुध्वनिः अस्ति।

नमोऽस्तु पतिदेवाय ब्रह्मविष्णुस्वरूपिणे।
चतुर्मुखोऽसि कलहे ताडने च चतुर्भुजः॥

**अन्वयः-**

ब्रह्मविष्णुस्वरूपिणे पतिदेवाय नमः अस्तु। (त्वं) कलहे चतुर्मुखः ताडने चतुर्भुजः च असि।

**पदपरिचयः-**

ब्रह्मविष्णुस्वरूपिणे- [ब्रह्मा च विष्णुः च ब्रह्मविष्णू (इतरेतरद्वन्द्वः), स्वस्य रूपम् स्वरूपम् (षष्ठीतत्पुरुषः), ब्रह्मविष्णू एव स्वरूपम् इति ब्रह्मविष्णुस्वरूपम्, ब्रह्मविष्णुस्वरूप+इनि] (ब्रह्मविष्णुस्वरूपिन्, चतुर्थ्याम् एकवचनम्)

पतिदेवाय- [पतिः एव देवः पतिदेवः (कर्मधारयः)] (पतिदेव, चतुर्थ्याम् एकवचनम्)

नमः- (अव्ययम्)

अस्तु- (√अस भुवि, लोटि प्रथमपुरुषे एकवचनम्)

कलहे- (कलह, सप्तम्याम् एकवचनम्)

चतुर्मुखः- [चत्वारि मुखानि यस्य (बहुव्रीहिः)] (चतुर्मुख, प्रथमायाम् एकवचनम्)

ताडने- [√तड आघाते+ल्युट्] (ताडन, सप्तम्याम् एकवचनम्)

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

चतुर्भुजः– [चत्वारः भुजाः यस्य (बहुव्रीहिः)] (चतुर्भुज, प्रथमायाम् एकवचनम्)
च– (अव्ययम्)
असि– (√अस भुवि, लटि मध्यमपुरुषे एकवचनम्)

## पदार्थाः–

| | |
|---|---|
| ब्रह्मविष्णुस्वरूपिणे | विरिञ्चि-नारायण-रूपिणे |
| पतिदेवाय | भर्तृरूपाय देवाय |
| नमः | नमस्कारः |
| अस्तु | भवतु |
| कलहे | विवादे |
| चतुर्मुखः | ब्रह्मा |
| ताडने | पीडने |
| चतुर्भुजः | विष्णुरूपः |
| च | उत |
| असि | भवसि |

## सरलार्थः–

हे पतिदेव! त्वं ब्रह्मविष्णुरूपः भवसि। तुभ्यं नमः। विवादे त्वं चतुर्मुखः ब्रह्मा असि पीडने च चतुर्भुजः विष्णुः असि।

## विशिष्टं व्याख्यानम्–

इमं श्लोकं कपालिनः भार्या रङ्गिणी कथयति। स्वस्य जीर्णं पुरातनं छत्रं मार्गे पतितं दृष्ट्वा कपाली अतीव क्रुद्धः भूत्वा गृहम् आगत्य उद्बन्धनाय रज्जुं याचते। तदा रङ्गिणी रज्जुम् अग्रे स्थापयति। तां रज्जुं दृष्ट्वा पुनः कुपितः हताशः च कपाली भार्यां तर्जयति। तस्य मरणेन रङ्गिणी विधवा स्यात् इति च स्मारयति। तदा रङ्गिणी कथयति यत् सा सधवा अपि सुखेन नैव वसति। पुनश्च तस्य मरणे विधवा भूत्वा अपि सा इतोऽपि कां वा दुर्दशां प्राप्नुयात् इति आक्षिपति सा। ततः स्वकार्यस्य समर्थनाय सा युक्तिम् उपस्थापयति। पत्या याचितां रज्जुं यदि सा न दद्यात् तर्हि गुरुजनस्य आज्ञायाः उल्लङ्घनेन पापं स्याद् इति मत्वा सा रज्जुं दत्तवती इति कथयति। तत् श्रुत्वा इतोऽपि कुपितः कपाली किं वक्तव्यम्

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





इति ज्ञातुम् अशक्नुवन् व्यङ्ग्येन कथयति यत् रङ्गिण्याः धर्मज्ञानं प्रखरम् अस्ति। तदा रङ्गिणी स्वस्याः धर्मज्ञानस्य प्रकटनाय इमं श्लोकं कथयति। अत्र श्लोके रङ्गिणी पतिं नमस्कुर्वती अपि व्यञ्जनया तं निन्दति। कपाली अतीव कलहनिपुणः अस्ति इति ज्ञापयितुं सा कथयति यत् स चतुर्मुखः अस्ति। वस्तुतः योगरूढः चतुर्मुखशब्दः ब्रह्मणः वाचकः। यतः ब्रह्मणः चत्वारि मुखानि सन्ति। अत्र तु रङ्गिणी चतुर्मुखशब्दस्य यौगिकार्थे प्रयोगं करोति। तेन कपाली यदा कलहं करोति तथा भाति यत् स चतुर्भिः मुखैः कलहं करोति इति। एवम् एव चतुर्भुजः इति शब्दः अपि योगरूढः विष्णोः वाचकः। कपाली परताडनकुशलः। यदा सः अन्यं ताडयति तदा चतुर्भिः भुजैः इव ताडयति इति वदति रङ्गिणी।

## छन्दः–

अत्र श्लोके अनुष्टुप् छन्दः। श्रुतबोधे तस्य लक्षणं यथा–

**श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।**
**द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः॥**

अनुष्टुप्छन्दसि प्रतिपादम् अष्टौ अक्षराणि भवन्ति। तत्र षष्ठम् अक्षरं गुरु पञ्चमं च लघु भवेत् इति उक्तम्। तथा च द्वितीयचतुर्थपादयोः सप्तमम् अक्षरं ह्रस्वं भवेत् अन्ययोः पादयोः सप्तमं दीर्घं भवेत् इति छन्दसः लक्षणम्। अस्मिन् छन्दसि पञ्चमषष्ठसप्तमाक्षराणाम् एव विचारः करणीयः भवति। प्रकृतश्लोके पश्यामः।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| प्रथमपादः | । | ऽ | । | । | **।** | **ऽ** | **ऽ** | ऽ |
| | न | मो | स्तु | प | **ति** | **दे** | **वा** | य |
| द्वितीयपादः | ऽ | । | ऽ | ऽ | **।** | **ऽ** | **।** | ऽ |
| | ब्र | ह्म | वि | ष्णु | **स्व** | **रू** | **पि** | णे |
| तृतीयपादः | । | ऽ | । | ऽ | **।** | **।** | **।** | ऽ |
| | च | तु | र्मु | खो | **सि** | **क** | **ल** | हे |
| चतुर्थपादः | ऽ | । | ऽ | । | **।** | **ऽ** | **।** | ऽ |
| | ता | ड | ने | च | **च** | **तु** | **र्भु** | जः |

अत्र तृतीयपादे काचन समस्या दृश्यते। तृतीये पादे षष्ठम् अक्षरं गुरु नास्ति। तृतीयपादे सप्तमाक्षरम् अपि दीर्घं भवेत्। किन्तु अत्र तथा नास्ति। अतः तृतीये पादे लक्षणं न समन्वेति। किन्तु एतत् अवधेयं यत् अनुष्टुप्छन्दसि

अयं नियमः कठिनतया न पाल्यते। प्रायः प्रामाणिकाः अपि कवयः अनुष्टुभि गुरुलघुनियमानां व्यत्यासं कुर्वन्तः दृश्यन्ते। अत्रापि तथा ज्ञेयम्। एतेन महान् दोषः न कल्प्यते।

**अलङ्काराः–**

अत्र शब्दार्थालङ्काराः इत्थं प्रकल्प्यन्ते–

**पुनरुक्तवदाभासः–** अत्र ब्रह्म-चतुर्मुख-शब्दयोः तथा विष्णु-चतुर्भुज-शब्दयोः समार्थकत्वेन प्रतिभासमानयोः अपि भिन्नार्थयोः प्रयोगात् पुनरुक्तवदाभासः।

**यमकम्–** चतुर् इति शब्दस्य द्विः आवृत्त्या यमकम्।

**व्याजनिन्दा–** चतुर्मुखत्वेन चतुर्भुजत्वेन कपालिनः स्तुतिं कुर्वती अपि वस्तुतः तं कलहपरायणतया अन्यपीडकतया च निन्दति इति कारणेन अत्र व्याजनिन्दा।

**उल्लेखः–** एक एव कपाली ब्रह्मत्वेन विष्णुत्वेन च कथितः इति कारणेन अत्र उल्लेखालङ्कारः।

**संसृष्टिः–** अत्र सर्वेषाम् अपि परस्परनिरपेक्षतया पार्थक्यसम्भवात् संसृष्टिः।

आतपवर्षात्राणं
हर्षाय यच्छरणम् आपन्नानाम्।
कर्त्तितबालद्रुमवत्
पथि तत् पातितम् अहो स्पर्द्धा॥

**अन्वयः–**

अहो स्पर्धा! आतपवर्षात्राणं, शरणम् आपन्नानां यद् हर्षाय, कर्तितबालद्रुमवत् तत् पथि पातितम्।

**पदपरिचयः–**

अहो– (अव्ययम्)
स्पर्धा– (स्पर्धा, प्रथमायाम् एकवचनम्)
आतपवर्षात्राणं– [आतपः च वर्षा च आतपवर्षे (इतरेतरद्वन्द्वः), आतपवर्षाभ्यां त्राणम् आतपवर्षात्राणम् (षष्ठीतत्पुरुषः), √त्रैङ् पालने+ल्युट्=त्राण]



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.



(आतपवर्षात्राण, प्रथमायाम् एकवचनम्)
शरणम्– (शरण, प्रथमायाम् एकवचनम्)
आपन्नानां– [आ-√पद गतौ+क्त] (आपन्न, षष्ठ्यां बहुवचनम्)
यद्– (यद्, नपुंसके प्रथमायाम् एकवचनम्)
हर्षाय– (हर्ष, चतुर्थ्याम् एकवचनम्)
कर्तितबालद्रुमवत्– [√कृती छेदने+क्त कर्तित, बालः च असौ द्रुमः च बालद्रुमः (कर्मधारयः), कर्तितः च बालद्रुमः च कर्तितबालद्रुमः (कर्मधारयः), कर्तितबालद्रुम+वति=कर्तितबालद्रुमवत्] (अव्ययम्)
तत्– (तद्, नपुंसके प्रथमायाम् एकवचनम्)
पथि– (पथिन्, सप्तम्याम् एकवचनम्)
पातितम्– [√पत्ऌ गतौ+णिच्+क्त=पातित] (पातित, प्रथमायाम् एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| अहो | विस्मयसूचकम् अव्ययम् |
| स्पर्धा | साहसम् |
| आतपवर्षात्राणं | सूर्यकराद् वर्षणात् च त्राणकर्ता |
| शरणम् | आश्रयम् |
| आपन्नानां | आगतानां |
| यद् | यत् |
| हर्षाय | आनन्दाय |
| कर्तितबालद्रुमवत् | छिन्नलघुवृक्षः इव |
| तत् | तत् |
| पथि | मार्गे |
| पातितम् | क्षिप्तम् |

**सरलार्थः–**

इदं छत्रम् आतपात् वर्षणात् च जनान् त्रायते। ये आतपकाले वृष्टिकाले वा अस्य च्छत्रस्य शरणं गच्छति तेषां कृते इदं छत्रं हर्षम् आतनोति। तद् एव च्छत्रं छिन्नं लघुवृक्षम् इव मार्गे पातितवतः कीदृशी स्पर्धा!

## विशिष्टशब्दानां विवेचनम्-

**आतपवर्षात्राणम्**- अत्र त्रायते अनेन इति विग्रहे √त्रैङ् पालने इति धातोः ल्युट् प्रत्ययः। ल्युट्-प्रत्ययस्य करणम् अर्थः। आतपवर्षाभ्यां त्राणम् इति विग्रहे आतपवर्षाभ्याम् इत्यत्र पञ्चमी। त्राणार्थकधातोः प्रयोगः अस्ति, आतपः वर्षा च भयस्य कारणम्। तस्मात् 'भीत्रार्थानां भयहेतुः' (अष्टाध्यायी १.४.२५) इति सूत्रेण आतपवर्षाभ्याम् इत्यस्य अपादानसंज्ञायाम् 'अपादाने पञ्चमी' (अष्टाध्यायी २.३.२८) इत्यनेन पञ्चमी। तेन पञ्चम्यन्तेन त्राणम् इति ल्युडन्तप्रकृतिकस्य सुबन्तस्य 'सह सुपा' (अष्टाध्यायी २.१.४) इति सूत्रेण समासः। अथवा 'मयूरव्यंसकादयश्च' (अष्टाध्यायी २.१.७२) इति सूत्रेण समासः। (अस्मिन् विषये अधिकं जिज्ञासवः 'पञ्चमी भयेन' (अष्टाध्यायी २.१.३७) इति सूत्रं पठन्तु।) अतः येन आतपाद् वृष्टेः च त्राणं सम्भवति तत् आतपवर्षात्राणम् इति अस्य शब्दस्य अर्थः।

**हर्षाय**- हर्षशब्दात् चतुर्थ्याम् एकवचने हर्षाय इति। √हृषु तुष्टौ इति धातोः 'भावे' (अष्टाध्यायी ३.३.१८) इति सूत्रेण घञ्-प्रत्यये कृते हर्ष इति शब्दः निष्पाद्यते। ततः 'क्लृपि सम्पद्यमाने च' इति वार्तिकेन चतुर्थ्यां हर्षाय इति पदं निष्पन्नं भवति। अत्र कल्पते इति क्रियापदस्य अध्याहारः कर्तव्यः। तेन यत् शरणम् आपन्नानां हर्षाय कल्पते इति पूर्णं वाक्यम्।

**कर्तितबालद्रुमवत्**- √कृती छेदने इति धातोः कर्मणि अर्थे क्त-प्रत्यये कर्तित इति शब्दः निष्पाद्यते। बालः च असौ द्रुमः च इति विग्रहे 'विशेषणं विशेष्येण बहुलम्' (अष्टाध्यायी २.१.५७) इति सूत्रेण कर्मधारयसमासः भवति। ततः कर्तितः च असौ बालद्रुमः च इति विग्रहे पुनः तेन एव सूत्रेण समासे कर्तितबालद्रुमः इति सिध्यति। ततः कर्तितबालद्रुमः इव इति विग्रहे 'तेन तुल्यं क्रिया चेद्वतिः' (अष्टाध्यायी ५.१.११५) इति सूत्रेण कर्तितबालद्रुमशब्दात् वति-प्रत्यये कर्तितबालद्रुमवत् इति शब्दः निष्पाद्यते। वतिप्रत्ययान्तः शब्दः 'तद्धितश्चासर्वविभक्तिः' (अष्टाध्यायी १.१.३८) इति सूत्रेण अव्ययं भवति।

## विशिष्टं व्याख्यानम्-

कपालिनः जीर्णं पुरातनं छत्रं मन्थरा मार्गे अक्षिपत्! तेन कुपितः कपाली मन्थराम् उद्दिश्य इमं श्लोकम् उच्चारयति। स कथयति यत् छत्रम् आतपात् वर्षणात् च जनान् त्रायते, यत् छत्रं शरणागतेभ्यः आनन्दं प्रयच्छति तदेव छत्रं

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





मन्थरा कथं मार्गे अक्षिपत्। यथा कश्चन क्रूरः निर्दयः जनः एकं लघुं वृक्षं कर्तयित्वा तं मार्गे निक्षिपति तथा एव मन्थरा इदं छत्रम् अनाथं मत्वा यत् मार्गे न्यक्षिपत् तत् अतीव जघन्यं कृत्यम् अस्ति। एतेन सह एव स कथयति यत्, इदं छत्रं तस्य पितामहेन तस्य पित्रा च उपयुक्तं, सम्प्रति तस्य सेवायां निमग्नम् इदं छत्रं तस्य पुत्रं पौत्रं च सेविष्यते। तादृशं कुलसेवकं छत्रं यत् मार्गे क्षिप्तं मन्थरया तद् अतीव निन्दितम्। तेन तां सा गर्भदासी इति भर्त्सयति। गर्भाद् एव या दासवृत्तिम् आचरति सा गर्भदासी।

## छन्दः-

इदम् आर्याछन्दसा निबद्धं पद्यम्। आर्याछन्दसः लक्षणम् अस्माभिः पूर्वं विचारितम् एव। प्रकृतश्लोकस्य छन्दोविनिर्णयं पश्यामः।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | १ | १ | २ | २ | २ | २ | | | | | १२ |
| आ | त | प | व | र्षा | त्रा | णं | | | | | |
| २ | २ | १ | २ | १ | १ | १ | २ | २ | २ | २ | १८ |
| ह | र्षा | य | य | च्छ | र | ण | मा | प | न्ना | नाम् | |
| २ | १ | १ | २ | २ | १ | १ | २ | | | | १२ |
| क | र्ति | त | बा | ल | द्रु | म | वत् | | | | |
| १ | १ | २ | २ | १ | १ | १ | २ | २ | २ | | १५ |
| प | थि | त | त्या | ति | त | म | हो | स्प | द्र्धा | | |

## अलङ्काराः-

**छेकानुप्रासः**- अत्र श्लोके र्षा इत्यस्य द्विः आवृत्तिः अस्ति इति अत्र छेकानुप्रासः द्रष्टव्यः।

**वृत्त्यनुप्रासः**- यकारस्य तकारस्य च असकृद् आवृत्त्या अत्र वृत्त्यनुप्रासः द्रष्टव्यः।

**स्वभावोक्तिः**- अत्र सामान्यस्य छत्रस्य महिमवर्णनाय तस्य गुणानां क्रियाणां च यथायथं वर्णनं करोति कविः। तस्माद् अत्र स्वभावोक्तिः अपि।

**उपमा**- कर्तितबालद्रुमवत् पातितं छत्रम् इति कथनेन अत्र पूर्णोपमा।

**संसृष्टिः**- समेषाम् अलङ्काराणाम् अत्र संसृष्टिः।

अद्भुतं द्रव्यम् उद्भूतं वनस्पतिघृताभिधम्।
न घोषो गौर्नवा घासो गोरसोऽपि न युज्यते॥

**अन्वयः-**

वनस्पतिघृताभिधम् अद्भुतं द्रव्यम् उद्भूतम्। न घोषः, न गौः, न वा घासः, गोरसः अपि न युज्यते।

**पदपरिचयः-**

वनस्पतिघृताभिधम्- [वनस्पतिः एव घृतम् वनस्पतिघृतम् (कर्मधारयः), वनस्पतिघृतम् अभिधा यस्य (बहुव्रीहिः)] (वनस्पतिघृताभिध, प्रथमायाम् एकवचनम्)
अद्भुतं- (अद्भुत, प्रथमायाम् एकवचनम्)
द्रव्यम्- (द्रव्य, प्रथमायाम् एकवचनम्)
उद्भूतम्- [उद्-√भू सत्तायाम्+क्त] (उद्भूत, प्रथमायाम् एकवचनम्)
न- (अव्ययम्)
घोषः- (घोष, प्रथमायाम् एकवचनम्)
न- (अव्ययम्)
गौः- (गो, प्रथमायाम् एकवचनम्)
न- (अव्ययम्)
वा- (अव्ययम्)
घासः- (घास, प्रथमायाम् एकवचनम्)
न- (अव्ययम्)
गोरसः- (गोरस, प्रथमायाम् एकवचनम्)
अपि- (अव्ययम्)
युज्यते- (√युजिर् योगे, कर्मणि प्रथमपुरुषे एकवचनम्)

**पदार्थाः-**

| | |
|---|---|
| वनस्पतिघृताभिधम् | वनस्पतिघृतनामकम् |
| अद्भुतं | विस्मयजनकम् |
| द्रव्यम् | पदार्थः |

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.





| | |
|---|---|
| उद्भूतम् | उत्पन्नम् |
| न | नहि |
| घोषः | गोपः |
| गौः | धेनुः |
| वा | अथवा |
| घासः | तृणम् |
| गोरसः | दुग्धं |
| युज्यते | अपेक्ष्यते |

**सरलार्थः-**

वनस्पतिघृतनामकं अद्भुतं द्रव्यम् अद्यत्वे लोके समुद्भूतम्। तद् नाम्ना घृतं किन्तु न तस्य उत्पत्तये गोपः अपेक्षितः भवति। न वा धेनुः अपेक्ष्यते। न च धेन्वाः भोजनाय घासः अपेक्षितः भवति। न वा तत्र क्षीरस्य योगः भवति।

**विशिष्टशब्दानां विवेचनम्-**

**घासः**- √अद भक्षणे इति धातोः 'अकर्तरि च कारके संज्ञायाम्' (अष्टाध्यायी ३.३.१९) इति सूत्रेण कर्मणि अर्थे घञ्-प्रत्यये अद्+घञ् इति दशायां 'घञपोश्च' (अष्टाध्यायी २.४.३८) इति सूत्रेण अद् इत्यस्य स्थाने घसॢ इति आदेशः भवति। ततः घस्+अ (घञ्) इति स्थिते 'अत उपधायाः' (अष्टाध्यायी ७.२.११६) इति सूत्रेण उपधायाः अकारस्य वृद्धौ घास इति शब्दः सिध्यति। घास इत्यस्य तृणम् इति अर्थः।

**गोरसः**- गोः रसः गोरसः इति षष्ठीतत्पुरुषसमासनिष्पन्नः शब्दः। किन्तु दुग्धादिषु अर्थेषु रूढः अयम्। वाचस्पत्ये तु दुग्धे दध्नि अन्येषु च अर्थेषु अयं शब्दः वर्तते इति कथितम्।

**विशिष्टं व्याख्यानम्-**

वनस्पतिघृतनामकं स्नेहद्रव्यम् अत्र स्तौति कपाली। शुनकदष्टस्य कपालिनः उपचाराय समागतः वैद्यः विषविकारस्य उपशमाय कपालिनं शुद्धगव्यघृतमिश्रितस्य क्षीरस्य पानाय उपादिशत्। किन्तु कृपणः कपाली घृतसेवनस्य नाम्ना कातरः सन् स्वगतम् इमं श्लोकं कथयति। स वदति

यत्, तस्य पितामहः कदाचित् दिने एकपादपरिमितं घृतं पिबति स्म। अद्यत्वे तु वनस्पतिघृतम् एव घृतस्य स्थानम् अधिकुरुते। तथा सति अयं वैद्यः वनस्पतिघृतम् अविगणय्य गव्यघृतसेवनस्य उपदेशं यद् ददाति तद् अतीव अयोग्यम्। एतत् सर्वं स्वगतं कथयित्वा वनस्पतिघृतस्य चमत्कारकतां स्मरन् स्वयम् एव विस्मयं प्रकटयति अनेन श्लोकेन।

गोपः गाम् उत्कृष्टं भोज्यं भोजयित्वा, तस्याः गोः क्षीरात् सारम् आदाय, भृशं तं सारं ज्वालयित्वा घृतम् उत्पादयति। किन्तु अस्य घृतनामधेयस्य पदार्थस्य उत्पत्तये गोपस्य, गोः, घासस्य उपयोगः एव नास्ति। गां विना दुग्धं च विना इदं घृतम् उत्पद्यते इति अस्य माहात्म्यम्। इत्थं चिन्तयति कपाली।

वस्तुतः अत्र वनस्पतिघृतम् इत्युक्ते अतसी-सर्षप-तिलेभ्यः व्यतिरिक्तेभ्यः विविधेभ्यः तैलबीजेभ्यः उत्पन्नः स्नेहपदार्थः। अस्य सर्षपादितैलापेक्षया गाढत्वात् आकारेण प्रकारेण वर्णेन च घृतेन सादृश्यात् च अस्य विषये घृतम् इति जना व्यवहरन्ति स्म। विविधवृक्षेभ्यः विनिर्गतत्वात् अस्य वनस्पतिघृतम् इति व्यवहारः। वनस्पतिशब्दस्य वृक्षः इति अर्थः तु प्रसिद्धः एव।

**छन्दः–**

अत्र अनुष्टुप् छन्दः। अस्य लक्षणादिकं पूर्वम् उक्तम्। अस्मिन् श्लोके प्रथमे पादे 'व्युमुद्भू' इति पञ्चमषष्ठसप्तमाक्षराणि। पञ्चमं लघु, षष्ठं गुरु, सप्तमं च दीर्घम् अस्ति। द्वितीये पादे 'रसाभि' इत्यत्र पञ्चमं लघु, षष्ठं गुरु, सप्तमं च ह्रस्वम् अस्ति। तृतीये पादे 'नवाघा' इत्यत्र यथाक्रमं लघु-गुरु-दीर्घाः सन्ति। चतुर्थे पादे अपि 'नयुज्य' इत्यत्र यथाक्रमं लघु-गुरु-ह्रस्वाः सन्ति इति लक्षणं सङ्गच्छते।

**अलङ्काराः–**

**छेकानुप्रासः–** अत्र श्लोके भुतम् भूतम् इति आवृत्तिः अस्ति इति कारणेन च्छेकानुप्रासः द्रष्टव्यः।

**वृत्त्यनुप्रासः–** दकारस्य, तकारस्य, वकारस्य, घकारस्य, गकारस्य असकृद् आवृत्त्या वृत्त्यनुप्रासः।

**श्रुत्यनुप्रासः–** त-द-ध-न-स-वर्णानां प्रयोगात्, य-ज-वर्णानां प्रयोगेण च श्रुत्यनुप्रासः।

**विभावना–** गोप-गो-घास-दुग्धानि विना घृतोत्पत्तिः भवति। अतः

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





कारणाभावे कार्योत्पत्तिः जाता। अन्ते च वनस्पतिघृतत्वात् तस्य विरोधस्य समाधानं भवति। अतः अत्र विभावनालङ्कारः।

**संसृष्टिः–** समेषाम् अलङ्काराणाम् अत्र संसृष्टिः।

श्वदन्तक्षतम् अत्यल्पम् इत्यतः कल्पते स्वयम्।
लौहतापजदाहेन मद्देहे विपुलं क्षतम्॥

**अन्वयः–**

श्वदन्तक्षतम् अत्यल्पम् इत्यतः मद्देहे लौहतापजदाहेन विपुलं क्षतं स्वयं कल्पते॥

**पदपरिचयः–**

श्वदन्तक्षतम्– [शुनः दन्तः श्वदन्तः (षष्ठीतत्पुरुषः), श्वदन्तेन क्षतम् (तृतीयातत्पुरुषः) √क्षणु हिंसायाम्+क्त क्षत] (श्वदन्तक्षत, प्रथमायाम् एकवचनम्)
अत्यल्पम्– [अतिशयितम् अल्पम् अत्यल्पम् (प्रादितत्पुरुषः)] (अत्यल्प, प्रथमायाम् एकवचनम्)
इत्यतः– [इति+अतः, इदम्+तसिल् अतः] (अव्ययम्)
मद्देहे– [मम देहः मद्देहः (षष्ठीतत्पुरुषः)] (मद्देह, सप्तम्याम् एकवचनम्)
लौहतापजदाहेन–[लौहस्य तापः लौहतापः (षष्ठीतत्पुरुषः), लौहतापात् जातः लौहतापजः (उपपदतत्पुरुषः) लौहताप-√जनी प्रादुर्भावे+ड, लौहतापजः च दाहः च लौहतापजदाहः (कर्मधारयः)] (लौहतापजदाह, तृतीयायाम् एकवचनम्)
विपुलं– (विपुल, नपुंसके द्वितीयायाम् एकवचने)
क्षतं– [√क्षणु हिंसायाम्+क्त] (क्षत, नपुंसके द्वितीयायाम् एकवचने)
स्वयं– (अव्ययम्)
कल्पते– (√कृपू सामर्थ्ये (क्लृप्), लटि प्रथमपुरुषे एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| श्वदन्तक्षतम् | कुक्कुरदंशनजनितं व्रणम् |
| अत्यल्पम् | बहु अल्पम् |
| इत्यतः | इति कारणेन |

| | |
|---|---|
| मद्देहे | मम शरीरे |
| लौहतापजदाहेन | उष्णलौहशलाकाकृतेन दाहेन |
| विपुलं | महत् |
| क्षतं | व्रणम् |
| स्वयं | स्वयम् |
| कल्पते | सम्पादयति |

**सरलार्थः–**

कुक्कुरस्य दंशनेन यत् व्रणम् अभवत् तत् अत्यन्तं लघु एव अस्ति। तस्माद् एष वैद्यः स्वस्य लाभार्थं स्वयं मम शरीरे तप्तलौहशलाकया अधिकं व्रणम् उत्पादयितुम् इच्छति।

**विशिष्टं व्याख्यानम्–**

इमं श्लोकं कपाली कथयति। शुनकेन दष्टस्य कपालिनः चिकित्सार्थं समागतः वैद्यः कपालिनः नटनं दृष्ट्वा तस्य विषविकारं शङ्कते। ततः विषविकारस्य शमनाय शुनकदशनजनितस्य क्षतस्य तप्तलौहशलाकया दाहम् उपदिशति। तदा कपाली वैद्यस्य अभीप्सां शङ्कते। अयं वैद्यः चिकित्साव्याजेन परस्वापहारी इति तस्य शङ्का। स चिन्तयति यत्, "शुनकदंशनेन जातं व्रणं लघु अस्ति। तस्य चिकित्सा अल्पकालसाध्या। अतः तेन अधिकं धनं प्राप्तुं न शक्यते। तस्मात् तद् व्रणम् एव वर्धयित्वा अयं वैद्यः अधिकं धनम् उपार्जयितुं यतते। तस्मात् तप्तलौहदाहेन स कपालिनः शरीरे अधिकं व्रणं सृजति येन अधिककालसाध्या चिकित्सा भवेत्। तस्य उपचाराय व्ययः अपि अधिकः भवेत्।" इदम् एव कपाली प्रकृतश्लोकेन कथयति।

**छन्दः–**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र प्रथमे पादे 'तमत्य' इति पञ्चमषष्ठसप्तमाक्षराणि। पञ्चमं लघु, षष्ठं गुरु अस्ति। किन्तु सप्तमं दीर्घं नास्ति। यद्यपि सप्तमम् अत्र गुरु अस्ति। द्वितीये पादे 'ल्पतेस्व' इत्यत्र पञ्चमं लघु, षष्ठं गुरु, सप्तमं च ह्रस्वम् अस्ति। तृतीये पादे 'जदाहे' इत्यत्र यथाक्रमं लघु-गुरु-दीर्घाः सन्ति। चतुर्थे पादे अपि 'पुलंक्ष' इत्यत्र यथाक्रमं लघु-गुरु-ह्रस्वाः सन्ति।



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



तेन प्रथमं पादम् अतिरिच्य अन्यत्र लक्षणं सङ्गच्छते।

**अलङ्काराः–**

**वृत्त्यनुप्रासः–** तकारस्य, यकारस्य, लकारस्य असकृद् आवृत्त्या वृत्त्यनुप्रासः।

**छेकानुप्रासः–** ल्प इत्यस्य व्यञ्जनसङ्घातस्य द्विः आवृत्त्या छेकानुप्रासः द्रष्टव्यः।

**श्रुत्यनुप्रासः–** न-त-ल-वर्णानां प्रयोगात् श्रुत्यनुप्रासः।

**संसृष्टिः–** उभयोः अत्र संसृष्टिः।

आत्मानं मन्यते स्वस्थम् अन्यान् सर्वान् विकारिणः।
श्वमुखात् पादुकाग्राही विकारग्रस्त उच्यते।

**अन्वयः–**

आत्मानं स्वस्थं मन्यते, अन्यान् सर्वान् विकारिणः (मन्यते), श्वमुखात् पादुकाग्राही (यः सः) विकारग्रस्त उच्यते।

**पदपरिचयः–**

आत्मानं– (आत्मन्, द्वितीयायाम् एकवचनम्)
स्वस्थं– [स्वभावेन तिष्ठति, (उपपदतत्पुरुषः) स्व-√ष्ठा गतिनिवृत्तौ+क=स्वस्थ] (स्वस्थ, द्वितीयायाम् एकवचनम्)
मन्यते– (√मनु अवबोधने, लटि प्रथमपुरुषे एकवचनम्)
अन्यान्– (अन्यत्, पुंसि द्वितीयायां बहुवचनम्)
सर्वान्– (सर्व, पुंसि द्वितीयायां बहुवचनम्)
विकारिणः–[विकारः अस्य अस्ति, विकार+इनि] (विकारिन्, पुंसि द्वितीयायां बहुवचनम्)
श्वमुखात्– [शुनः मुखं श्वमुखम् (षष्ठीतत्पुरुषः)] (श्वमुख, पञ्चम्याम् एकवचनम्)
पादुकाग्राही– [पादुकां ग्रहीतुं शीलम् अस्य (उपपदतत्पुरुषः), पादुकाम्-√ग्रह उपादाने+इनि] (पादुकाग्राहिन्, प्रथमायाम् एकवचनम्)
विकारग्रस्तः– [विकारेण ग्रस्तः (तृतीयातत्पुरुषः) √ग्रसु अदने+क्त=ग्रस्त]

(विकारग्रस्त, प्रथमायाम् एकवचनम्)
उच्यते– (√वच परिभाषणे, कर्मणि लटि प्रथमपुरुषे एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| आत्मानं | स्वम् |
| स्वस्थं | उल्लाघं |
| मन्यते | चिन्तयति |
| अन्यान् | अपरान् |
| सर्वान् | समान् |
| विकारिणः | विकारग्रस्तान् |
| श्वमुखात् | कुक्कुरस्य कवलात् |
| पादुकाग्राही | उपानद्गृहीता |
| विकारग्रस्त | विकारी |
| उच्यते | कथ्यते |

**सरलार्थः–**

यः जनः स्वयम् आत्मानम् उल्लाघं मत्वा अन्यान् विकारग्रस्तान् मन्यते। तथा च शुनकस्य मुखात् पादुकां सङ्गृह्णाति स एव विकारग्रस्त इति कथ्यते।

**विशिष्टशब्दानां विवेचनम्–**

**स्वस्थः**– स्वेन तिष्ठति इति विग्रहे स्वेन इति उपपदपूर्वकात् √ष्ठा गतिनिवृत्तौ इति धातोः 'सुपि स्थः' (अष्टाध्यायी ३.२.४) इति सूत्रेण क-प्रत्ययः क्रियते। ष्ठा-धातोः 'धात्वादेः षः सः' (अष्टाध्यायी ६.१.६४) इति सूत्रेण आदेः षकारस्य सकारः भवति। तेन ठकारस्य अपि थकारः सम्भवति। क-प्रत्ययस्य ककारस्य 'लशक्वतद्धिते' (अष्टाध्यायी १.३.८) इति सूत्रेण इत्संज्ञायां तस्य लोपः भवति। ततः स्था+अ इति दशायां स्था इत्यस्य अङ्गसंज्ञा भवति। ततः 'आतो लोप इटि च' (अष्टाध्यायी ६.४.६४) इति सूत्रेण आकारस्य लोपे स्थ्+अ=स्थ इति जायते। तेन सह उपपदस्य स्वेन इत्यस्य 'उपपदमतिङ्' (अष्टाध्यायी २.२.१९) इति सूत्रेण समासे स्वस्थ इति शब्दः निष्पाद्यते। स्वेन इत्यस्य स्वभावेन इत्यर्थः। तेन स्वस्थ इत्युक्ते स्वभावे स्थितः इति अर्थः सम्भवति। वस्तुतः अयं शब्दः उल्लाघः





नीरोगः इत्यस्मिन् अर्थे रूढः।

**विकारिणः**– वि इति उपसर्गपूर्वकात् √डुकृञ् करणे इति धातोः 'भावे' (अष्टाध्यायी ३.३.१८) इति सूत्रेण घञ्-प्रत्यये विकार इति शब्दः निष्पाद्यते। ततः विकारः अस्य अस्ति इति विग्रहे 'अत इनिठनौ' (अष्टाध्यायी ५.२.११५) इति सूत्रेण विकारशब्दात् इनि-प्रत्यये विकार+इन् इति दशायां विकार इत्यस्य भसंज्ञा भवति। ततः 'यस्येति च' (अष्टाध्यायी ६.४.१४८) इति सूत्रेण इकारस्य लोपे विकारिन् इति शब्दः निष्पाद्यते। तस्य द्वितीयायां बहुवचने विकारिणः इति रूपं सिध्यते। अत्र 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (अष्टाध्यायी ८.४.२) इति सूत्रेण णत्वं भवति।

**श्वमुखात्**– शुनः मुखं श्वमुखम् इति षष्ठीतत्पुरुषसमासः। श्वन् ङस् मुख सु इति अलौकिकविग्रहे समासस्य प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' (अष्टाध्यायी २.४.७१) इति प्रातिपदिकमध्यस्थस्य सुपः लुकि श्वन् मुख इति जाते 'प्रत्ययलोपे प्रत्ययलक्षणम्' (अष्टाध्यायी १.१.६२) इति नियमेन श्वन् इत्यस्य सुबन्ततया पदसंज्ञायां 'नलोपः प्रातिपदिकान्तस्य' (अष्टाध्यायी ८.२.७) इति सूत्रेण नकारस्य लोपे श्वमुखशब्दस्य निष्पत्तिः। ततः पञ्चम्याम् एकवचने इदं रूपम्।

**पादुकाग्राही**– पादुकां ग्रहीतुं शीलम् अस्य इति विग्रहे पादुकाम् इति सुबन्ते उपपदे √ग्रह उपादाने इति धातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' (अष्टाध्यायी ३.२.७८) इति सूत्रेण णिनि-प्रत्यये णिनि इत्यस्य 'चुटू' (अष्टाध्यायी १.३.७) इति सूत्रेण णकारस्य तथा इकारस्य 'उपदेशेऽजनुनासिक इत्' (अष्टाध्यायी १.३.२) इति सूत्रेण इत्संज्ञायां लोपे च ग्रह्+इन् इति जाते 'अत उपधायाः' (अष्टाध्यायी ७.२.११६) इति सूत्रेण उपधायाः अकारस्य वृद्धौ ग्राहिन् इति भवति। तस्य पादुकाम् इति सुबन्तेन सह 'उपपदमतिङ्' (अष्टाध्यायी २.२.१९) इति सूत्रेण समासे पादुकाग्राहिन् इति सिध्यति। तस्य प्रथमायाम् एकवचने पादुकाग्राही इति सिध्यति।

**विशिष्टं व्याख्यानम्–**

प्रकृतश्लोकः तान्त्रिकस्य वचनम्। रङ्गिण्या आहूतः तान्त्रिकः आगत्य कपालिनं विकारग्रस्तं प्रतिपादयितुं यतते स्म। वस्तुतः पूर्वम् एव कपालिनः स्वगतोक्तिकाले तस्य ओष्ठाधरयोः स्पन्दनेन तस्य विकारम् अनुमिनोति स्म रङ्गिणी। वैद्यः अपि तत् निश्चितवान् आसीत्। ततः पलायिते वैद्ये यदा तान्त्रिकः

Kavikulguru Kalidas Sanskrit University Ramtek Collection

आगतः तदा तस्य पुरतः अपि रङ्गिण्या पत्युः विषविकारः आशङ्कितः। तान्त्रिकः तस्याः वचने सम्मतिं प्रादर्शयत्। किन्तु तं विरुध्य कपाली अकथयत् यत् गृहे अन्येषां सर्वेषाम् अपि विकारः अस्ति। केवलं कपाली एकः एव स्वस्थः अस्ति इति। एतत् श्रुत्वा कपालिनः वचनेन एव तस्य विकारग्रस्तता ज्ञायते। कपाली पृच्छति कथं तथा वक्तुं शक्यते इति। तदा तान्त्रिकः कथयति यत् शास्त्रे विकारलक्षणम् एवम् एव कथितम् अस्ति। तत् शास्त्रवचनं सूचयितुम् इमं श्लोकम् उपस्थापयति तान्त्रिकः।

श्लोके उच्यते यत्, यः आत्मानं स्वस्थं मत्वा अन्यान् विकारिणः चिन्तयति तथा च शुनकस्य मुखात् पादुकां बलाद् आहरति स पादुकाग्रस्तः भवति इति शास्त्रवचनम्।

कपाली आशङ्कते यत् इदं शास्त्रम् अप्रमाणम्। केनचित् प्रमत्तेन इदं शास्त्रं व्यवस्थापितम् इति। तान्त्रिकः कथयति इदं सद्योजातसंहितायाः वचनम् इति। कपाली पुनः विस्मयापन्नः पृच्छति केन इदं शास्त्रं रचितम् इति। सद्योजातः शिवः इति अजानतः कपालिनः उपहासं करोति तान्त्रिकः। कपाली च स्वस्य विकारग्रस्ततायां स्वयम् अपि सन्देहापन्नः भवति।

वस्तुतः सद्योजातेन रचिता संहिता सद्योजातसंहिता इति अस्य नाम्नः तात्पर्यम्। सद्योजातः इति शिवस्य नाम। वस्तुतः शिवस्य चत्वारि रूपाणि प्रसिद्धानि सन्ति। तानि च ईशानः अघोरः वामदेवः सद्योजातः इति। तस्मात् सद्योजातशब्देन शिवः एव बुध्यते। अतः इयं संहिता साक्षात् भगवता शिवेन प्रोक्ता इति तान्त्रिकः कथयति। किन्तु तस्य अन्यद् अपि तात्पर्यम् अस्ति। सद्यः जातः सद्योजातः, सद्योजाता चासौ संहिता च सद्योजातसंहिता इति अपि समासः भवितुम् अर्हति। तस्य अर्थः भवति या संहिता इदानीम् एव उत्पन्ना इति। वस्तुतः इमं श्लोकं तान्त्रिकः तस्मिन् क्षणे एव रचयित्वा तं श्रावितवान्। तस्मात् तत् पद्यं सद्योजातसंहिता इति पदेन व्यपदिष्टम्। इत्थं श्लेषेण अस्याः संहितायाः नाम कथयित्वा तान्त्रिकः स्वस्य बुद्धिवैशद्यं प्रत्युत्पन्नमतितां च प्रमाणयति। सहृदयानां च एतत् हर्षजनकं भवति। तस्मात् इदं सद्योजात इति पदम् अर्थश्लेषालङ्कारम् अपि सृजति प्रकृतप्रकरणे।

**छन्दः–**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र प्रथमे पादे 'न्यतेस्व' इति पञ्चमषष्ठसप्तमाक्षराणि। पञ्चमं लघु, षष्ठं गुरु अस्ति। किन्तु सप्तमं दीर्घं नास्ति।





यद्यपि सप्तमम् अत्र गुरु अस्ति। द्वितीये पादे 'विकारि' इत्यत्र पञ्चमं लघु, षष्ठं गुरु, सप्तमं च ह्रस्वम् अस्ति। तृतीये पादे 'दुकाग्रा' इत्यत्र यथाक्रमं लघु-गुरु-दीर्घाः सन्ति। चतुर्थे पादे अपि 'स्तउच्य' इत्यत्र यथाक्रमं लघु-गुरु-ह्रस्वाः सन्ति। तेन प्रथमं पादम् अतिरिच्य अन्यत्र लक्षणं सङ्गच्छते।

**अलङ्काराः–**

**अर्थान्तरन्यासः–** अत्र स्वस्थम्मन्यता, अन्येषां विकारग्रस्ततायाः कल्पनं तथा शुनकमुखात् पादुकाग्रहणं सर्वेषां विकारिणां विशिष्टाः धर्माः। तेषां धर्माणां साधर्म्यात् अत्र कपालिनि विकारित्वसामान्यं सूच्यते। तेन अत्र अर्थान्तरन्यासः सूच्यते।

**अनुमानम्–** अत्र अर्थान्तरन्यासालङ्कारस्य साहाय्येन कपालिनः विकारग्रस्तता अनुमीयते इति कारणेन अत्र अनुमानालङ्कारः।

प्राणेषु नादरो यस्य मोहश्छिन्नपरिच्छदे।
कुब्जखञ्जौ परिजनौ सविकारः स उच्यते॥

**अन्वयः–**

यस्य प्राणेषु आदरः न, छिन्नपरिच्छदे मोहः, कुब्जखञ्जौ परिजनौ, स सविकारः उच्यते।

**पदपरिचयः–**

प्राणेषु– (प्राण, सप्तम्यां बहुवचनम्)
यस्य– (यद्, पुंसि षष्ठ्याम् एकवचनम्)
आदरः– (आदर, प्रथम्याम् एकवचनम्)
न– (अव्ययम्)
छिन्नपरिच्छदे– [√छिदिर् द्वैधीकरणे+क्त=छिन्न, छिन्नश्चासौ परिच्छदः (कर्मधारयसमासः)] (छिन्नपरिच्छद, सप्तम्याम् एकवचनम्)
मोहः– [√मुह वैचित्त्ये+घञ्=मोह] (मोह, प्रथमायाम् एकवचनम्)
कुब्जखञ्जौ– [कुब्जा च खञ्जश्च (इतरेतरद्वन्द्वः)] (कुब्जखञ्ज, प्रथमायां द्विवचनम्)
परिजनौ– (परिजन, प्रथमायां द्विवचनम्)

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

सः– (तद्, पुंसि प्रथमायाम् एकवचनम्)
सविकारः– [सह विकारेण वर्तते (बहुव्रीहिः)] (सविकार, प्रथमायाम् एकवचनम्)
उच्यते– (√वच परिभाषणे, कर्मणि लटि प्रथमपुरुषे एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| यस्य | यस्य जनस्य |
| प्राणेषु | जीवने |
| आदरः | माया |
| न | नहि |
| छिन्नपरिच्छदे | जीर्णपरिधेये |
| मोहः | आसक्तिः |
| कुब्जखञ्जौ | कुब्जः खञ्जः च |
| परिजनौ | आत्मीयौ |
| स | स जनः |
| सविकारः | विकारी |
| उच्यते | कथ्यते |

**सरलार्थः–**

यस्य जनस्य स्वजीवने आदरः नास्ति, यस्य मोहः जीर्णेषु परिधेयेषु तथा यस्य अनुचराः कुब्जाः खञ्जाः च भवन्ति तादृशः जनः एव विकारग्रस्तः इति कथ्यते।

**विशिष्टं व्याख्यानम्–**

अयं श्लोकः अपि तान्त्रिकस्य एव वचनम्। पूर्वश्लोकेन तान्त्रिकः कपालिनः विकारग्रस्तता अस्ति इति सर्वेषां पुरतः उदघाटयत्। कपाली तान्त्रिकस्य चातुर्येण चकितः अभवत्। किन्तु स तान्त्रिके न विश्वसिति। पूर्वम् उच्चारितः श्लोकः सद्योजातसंहितायाम् अस्ति इति अवदत्। ततः सद्योजातः शिवस्य नाम इति न जानाति कपाली इति वदन् तान्त्रिकः कपालिनः परिहासं कृतवान्। ततः तान्त्रिकं प्रवञ्चकं प्रमाणयितुं कपाली यतते। वस्तुतः कपाली अवगतवान् यत्, तान्त्रिकः तं वञ्चयति। तान्त्रिकं प्रश्नबाणेन पीडयित्वा तस्य मुखात् प्रवञ्चनपरं किमपि वाक्यं निःसरतु इति कपालिनः तन्त्रम्। तद्यथा

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





पूर्वश्लोकेन विकारग्रस्ततायां प्रमाणितायाम् अपि स पुनः विकारग्रस्ततायाः प्रमाणम् ईहते।

पूर्वं कपाली स्वयम् एव अवोचत् यत्, विकारग्रस्तता न प्रत्यक्षतः प्रमाणयितुं शक्यते। विकारग्रस्तता लक्षणैः अनुमेया भवति इति। इदानीं तस्य वाक्यस्य साहाय्यं स्वीकृत्य एव तान्त्रिकः विकारग्रस्ततायाः लक्षणानि स्वयम् एव कल्पयित्वा कथयति। तेन व्याजेन स कपालिनः वास्तविकं चरित्रम् उद्घाटयति। वस्तुतः स कपालिनः विषये पूर्वम् एव सर्वं तथ्यं सङ्गृह्य समागतः अस्ति प्रतिवेशिभ्यः। अतः कपालिनः चरितोद्घाटनं तस्य सुकरम् एव। अतः यदा कपाली अपृच्छद् यत् कैः लक्षणैः कपालिनः विकारग्रस्तता अनुमीयते तदा प्रथमश्लोकेन स कपालिनः चरितम् एव अनुकृतवान्। ततः परं पुनः कपालिना पृष्टः स पुनः अपि कपालिनः चरित्रस्य परिहासं कृतवान्। एतेन कपाली अपि स्वकौशलं परिवर्तितवान्। स ज्ञातवान् यत् एष तान्त्रिकः कपालिनः परिहासं कुर्वन् परिजनानां पुरतः तस्य अपमानं कारयति इति। अतः कपाली अपि स्वगतं कथयति यत्, तस्य चरितं सर्वम् एष उद्घाटयति इति।

कपाली कृपणः कोपनः अपि स्वमानरक्षणे बद्धादरः। स्वस्य अपमानं स न इच्छति। अतः यदा पल्लीवास्तव्यात् पादुका पङ्गुरामेण आनीता तदा स क्रुद्धः। नूतनस्य कटस्य विस्तारेण कुपितं तं शमयितुं रङ्गिणी अवदत् यत् वैद्यः आगत्य च्छिन्नं कटं दृष्ट्वा अन्यथा मन्येत। तदा स नूतनस्य कटस्य विस्तरणे पुनः न विरोधम् अकरोत्। अन्येषां सकाशात् चिपिटकं याचिष्यते इति कथयन्तीं रङ्गिणीं भर्त्सयतः अपि तस्य आत्ममानप्रियता स्फुटा एव। अतः तस्य प्रश्नस्य उत्तरं ददत् तान्त्रिकः तस्य एव चरितम् उद्घाट्य तं हास्यास्पदं करोति इति ज्ञात्वा स तान्त्रिकस्य प्रवञ्चकत्वं प्रमाणयितुं कृतं परिप्रश्नरूपं यत्नम् उपसंहरति।

**छन्दः–**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र प्रथमे पादे 'दरोय' इति पञ्चमषष्ठसप्तमाक्षराणि। पञ्चमं लघु, षष्ठं गुरु अस्ति। किन्तु सप्तमं दीर्घं नास्ति। यद्यपि सप्तमम् अत्र गुरु अस्ति। द्वितीये पादे 'परिच्छ' इत्यत्र पञ्चमं लघु, षष्ठं गुरु, सप्तमं च ह्रस्वम् अस्ति। तृतीये पादे 'परिज' इत्यत्र सर्वं लघु अस्ति। किन्तु सप्तमं दीर्घं नास्ति गुरु अपि न भवति। चतुर्थे पादे अपि 'सउच्य' इत्यत्र यथाक्रमं लघु-गुरु-ह्रस्वाः सन्ति। अत्र प्रथमे तृतीये पादे च लक्षणं न सङ्गच्छते।

**अलङ्काराः–**

**अर्थान्तरन्यासः–** अत्र प्राणेषु अनादरः, छिन्नपरिच्छदे मोहः तथा कुब्जखञ्जपरिजनवेष्टितत्वं विकारिणां विशिष्टाः धर्माः। तेषां धर्माणां साधर्म्यात् अत्र कपालिनि विकारित्वसामान्यं सूच्यते। तेन अत्र अर्थान्तरन्यासः सूच्यते।

तिन्तिडीगुडयोगो वा मरीचं वा क्वचिद् भवेत्।
लवणं तैलबिन्दुर्वा कचुः सिद्धा क्वचित् क्वचित्॥

**अन्वयः–**

तिन्तिडीगुडयोगः वा मरीचं वा क्वचित् लवणं तैलबिन्दुः वा भवेत्। क्वचित् क्वचित् सिद्धा कचुः भवेत्।

**पदपरिचयः–**

तिन्तिडीगुडयोगः– [तिन्तिडी च गुडश्च (इतरेतरद्वन्द्वः), तयोः योगः (षष्ठीतत्पुरुषः)। √युजिर् योगे+घञ्=योग] (तिन्तिडीगुडयोग, प्रथमायाम् एकवचनम्)
वा– (अव्ययम्)
मरीचं– (मरीच, प्रथमायाम् एकवचनम्)
क्वचित्– (अव्ययम्)
लवणं– (लवण, प्रथमायाम् एकवचनम्)
तैलबिन्दुः– [तैलस्य बिन्दुः (षष्ठीतत्पुरुषसमासः)](तैलबिन्दु, प्रथमायाम् एकवचनम्)
भवेत्– (√भू सत्तायाम्, विधिलिङि प्रथमपुरुषे एकवचनम्)
सिद्धा– [√साध संसिद्धौ+क्त=सिद्ध। सिद्ध+टाप्=सिद्धा] (सिद्धा, प्रथमायाम् एकवचनम्)
कचुः– (कचु, प्रथमायाम् एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| तिन्तिडीगुडयोगः | चिञ्चाफलस्य गुडस्य वा योगः |



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection



| | |
|---|---|
| वा | अथवा |
| मरीचं | मरीचिका |
| क्वचित् | कदाचित् |
| लवणं | लवणं |
| तैलबिन्दुः | स्नेहबिन्दुः |
| भवेत् | स्यात् |
| सिद्धा | क्वथिता |
| कचुः | कचुः |

**सरलार्थः–**

कदाचित् तिन्तिडीफलं कदाचित् गुडं कदाचित् लवणं कदाचित् अल्पं तैलं कदाचित् सिद्धा कचुः चिपिटके योजयितुं शक्यते।

**विशिष्टं व्याख्यानम्–**

तान्त्रिकस्य इदं वचनम्। चिपिटकचर्वणव्रतस्य नियमं सूचयति अयम्। त्रीन् मासान् यावत् सर्वैः परिवारजनैः चिपिटकस्य एव सेवनं कर्तव्यम् इति यदा तान्त्रिकः असूचयत् तदा कपाली अतीव हृष्टः अभवत्। सर्वे अपि परिवारजनाः केवलं चिपिटकम् एव खादिष्यन्ति चेत् तस्य व्ययः अल्पः भविष्यति पुनश्च समेषां किञ्चिद् दण्डनम् अपि भविष्यति इति विचिन्त्य कपाली हृष्टः आसीत्। तदा प्रसङ्गेन तेन पृष्टं यत्, चिपिटकेन सार्धं व्यञ्जनरूपेण कमपि शाकं खादितुं शक्नुवन्ति वा व्रतधारिणः इति। तस्य उत्तररूपेण तान्त्रिकः इदं वचनं ब्रवीति।

अत्र प्राचीने मुद्रिते पुस्तके कबुः इति मुद्रितं दृश्यते। किन्तु कबुः इति शब्दः कोशे न दृश्यते। प्रसङ्गम् अनुसृत्य वयम् अत्र कचुः इति शब्दं स्थापयामः। कचुः इति ओषधिविशेषः प्रसिद्धः। नवपत्रिकायां कचुः अन्यतमा। तस्य ओषधेः पत्रं काण्डं मूले स्थितं कन्दं च खादन्ति जनाः। प्रायशः अस्य भक्षणेन कण्ठे कण्डूतिः जायते इति प्रसिद्धिः। सामान्यतया दरिद्राः एव इदम् आधिक्येन भक्षयन्ति। कण्डूतिजनकत्वात् सुलभत्वात् च अस्य महान् आदरः समाजे न भवति। पुनः दग्धकचुः इति शब्दः वङ्गभाषायाम् अनादरार्थे निन्दार्थे च भृशं प्रयुज्यते। प्रहसने तादृशस्य वस्तुनः नामोल्लेखः हासं जनयेत् प्रेक्षकाणाम् इति अपि अस्य शब्दस्य प्रयोगे औचित्यं मन्यामहे वयम्।

**छन्दः-**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र तृतीये पादे सप्तमं दीर्घं नास्ति। किन्तु गुरु अस्ति। अन्यत्र सर्वत्र लक्षणसमन्वयः भवति।

सक्तुं चिपिटकं चैव विरिञ्चिस्तुलया दधत्।
न निर्णेतुं क्षमोऽद्यापि कस्मिन् पक्षे जयो भवेत्॥

**अन्वयः-**

विरिञ्चिः सक्तुं चिपिटकं च एव तुलया दधत् कस्मिन् पक्षे जयः भवेत् (इति) अद्य अपि निर्णेतुं न क्षमः।

**पदपरिचयः-**

विरिञ्चिः- (विरिञ्चि, प्रथमायाम् एकवचनम्)
सक्तुं- (सक्तु, द्वितीयायाम् एकवचनम्)
चिपिटकं- (चिपिटक, द्वितीयायाम् एकवचनम्)
च- (अव्ययम्)
एव- (अव्ययम्)
तुलया- (तुला, तृतीयायाम् एकवचनम्)
दधत्-[√डुधाञ् धारणपोषणयोः+शतृ दधत्] (दधत्, प्रथमायाम् एकवचनम्)
कस्मिन्- (किम्, पुंसि सप्तम्याम् एकवचनम्)
पक्षे- (पक्ष, सप्तम्याम् एकवचनम्)
जयः-[√जि जये+अच्] (जय, प्रथमायाम् एकवचनम्)
भवेत्- (√भू सत्तायाम्, विधिलिङि प्रथमपुरुषे एकवचनम्)
अद्य- (अव्ययम्)
अपि- (अव्ययम्)
निर्णेतुं-[निर्-√णीञ् प्रापणे+तुमुन्] (अव्ययम्)
न- (अव्ययम्)
क्षमः-[√क्षमूष् सहने+अच्] (क्षम, प्रथमायाम् एकवचनम्)





**पदार्थाः-**

| | |
|---|---|
| विरिञ्चिः | विधाता ब्रह्मा |
| सक्तुं | सक्तुं |
| चिपिटकं | पृथुकं |
| तुलया | तुलादण्डेन |
| दधत् | धारयन् |
| कस्मिन् | कतरस्मिन् |
| पक्षे | पक्षे |
| जयः | जयः |
| भवेत् | स्यात् |
| अद्य | इदं दिनं यावत् |
| निर्णेतुं | निश्चेतुं |
| क्षमः | समर्थः |

**सरलार्थः-**

विधाता कदाचित् सक्तुं पृथुकं च तुलादण्डेन धारयन् कतरः पक्षः ज्यायान् इति निर्धारयितुं प्रयतितवान्। किन्तु विधाता अपि एतावता तस्य निर्णये असमर्थः अस्ति।

**विशिष्टं व्याख्यानम्-**

अयं श्लोकः कपालिना उक्तः। समस्तपरिवारेण चिपिटकचर्वणाय यदा तान्त्रिकः उपादिशत् तदा चिपिटकस्य स्तुतिं कुर्वन् कपाली इदं पद्यम् उक्तवान्। सक्तुचिपिटकयोः मध्ये किं श्रेष्ठम् इति निर्णये भगवान् ब्रह्मा अपि न समर्थः। सक्तु-चिपिटकयोः उभयोः अपि अपक्वयोः भक्षणयोग्यतया इयं तुलना क्रियते कपालिना।

**छन्दः-**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection

जलार्द्रञ्च चिपिटकं पङ्कवद् विरसायते।
शुष्कं कृन्तति वक्त्रौष्ठरसनं काष्ठचूर्णवत्॥

**अन्वयः-**

जलार्द्रं चिपिटकं पङ्कवद् विरसायते, शुष्कं (चिपिटकं) च काष्ठचूर्णवत् वक्त्रौष्ठरसनं कृन्तति।

**पदपरिचयः-**

जलार्द्रं- [जलेन आर्द्रं जलार्द्रम् (तृतीयातत्पुरुषः)] (जलार्द्र, प्रथमायाम् एकवचनम्)
चिपिटकं- (चिपिटक, प्रथमायाम् एकवचनम्)
पङ्कवद्- [पङ्क+वति=पङ्कवत्] (अव्ययम्)
विरसायते- [विरस इव आचरति, विरस+क्यङ्] (√विरसाय, प्रथमपुरुषे एकवचनम्)
शुष्कं- [√शुष शोषणे+क्त] (शुष्क, नपुंसके प्रथमायाम् एकवचनम्)
च- (अव्ययम्)
काष्ठचूर्णवत्- [काष्ठस्य चूर्णं काष्ठचूर्णम्, काष्ठचूर्ण+वति काष्ठचूर्णवत्] (अव्ययम्)
वक्त्रौष्ठरसनं- [वक्त्रं च ओष्ठः च रसनं च वक्त्रोष्ठरसनम् (समाहारद्वन्द्वः)] (वक्त्रौष्ठरसन, प्रथमायाम् एकवचनम्)
कृन्तति- (√कृती छेदने, लटि प्रथमपुरुषे एकवचनम्)

**पदार्थाः-**

| | |
|---|---|
| जलार्द्रं | नीरसिक्तं |
| पङ्कवद् | पङ्कः इव |
| विरसायते | विस्वादः प्रतिभाति |
| शुष्कं | जलरहितं |
| काष्ठचूर्णवत् | काष्ठचूर्णम् इव |
| वक्त्रौष्ठरसनं | मुखगह्वरम् अधरं जिह्वां च |
| कृन्तति | छिनत्ति |

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.





**सरलार्थः-**

सिक्तं चिपिटकं पङ्कः इव स्वादहीनः भवति। शुष्कं चिपिटकं काष्ठचूर्णम् इव मुखं छिनत्ति।

**विशिष्टशब्दानां विवेचनम्-**

**विरसायते**- विगतः रसः यस्मात् इति विग्रहे 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति वार्तिकेन समासे गतः इति उत्तरपदस्य लोपः भवति। तेन विरसः इति शब्दः निष्पाद्यते। अत्र बहुव्रीहिसमासः। ततः विरस इव आचरति इति विग्रहे क्यङ्-प्रत्ययः भवति। तेन 'सनाद्यन्ता धातवः' (अष्टाध्यायी ३.१.३२) इत्यनेन सूत्रेण क्यङन्तस्य विरसाय इतस्य धातुसंज्ञा भवति। ततः लटि प्रथमपुरुषे एकवचने विरसायते इति सिध्यति। क्यङ्-प्रत्ययस्य विवरणं चिपिटायित इति शब्दे द्रष्टव्यम्।

**विशिष्टं व्याख्यानम्-**

रङ्गिणी इमं श्लोकम् उच्चारयति। चिपिटकभक्षणे स्वस्याः असम्मतिं प्रदर्शयन्ती सा चिपिटकस्य निन्दार्थम् इमं श्लोकं कथयति।

**छन्दः-**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र प्रथमे पादे षष्ठं गुरु नास्ति सप्तमं दीर्घं च नास्ति। अन्यत्र लक्षणं सङ्गच्छते।

**अलङ्काराः-**

**उपमा-** पङ्केन काष्ठचूर्णेन च चिपिटकस्य सादृश्यवर्णनात् उपमा। पूर्णोपमा अत्र।

कुक्कुरीव ललज्जिह्वा भोजनार्थं दिवानिशम्।
गृहे गृहे भ्रमन्ती त्वं वर्धय स्वामिगौरवम्॥

**अन्वयः-**

ललज्जिह्वा कुक्कुरी इव दिवानिशं गृहे गृहे भोजनार्थं भ्रमन्ती त्वं स्वामिगौरवं

वर्धय।

**पदपरिचयः–**

ललज्जिह्वा– [ललन्ती जिह्वा यस्याः सा ललज्जिह्वा (बहुव्रीहिः), √लल ईप्सायाम्+शतृ ललत्, ललत्+ङीप् ललन्ती] (ललज्जिह्वा, प्रथमायाम् एकवचनम्)
कुक्कुरी– [कुक्कुर+ङीष्] (कुक्कुरी, प्रथमायाम् एकवचनम्)
इव– (अव्ययम्)
दिवानिशं– [दिवा च निशा च दिवानिशम् (समाहारद्वन्द्वः)] (दिवानिश, द्वितीयायाम् एकवचनम्)
गृहे– (गृह, सप्तम्याम् एकवचनम्)
भोजनार्थं– [भोजनाय इदम् भोजनार्थम् (चतुर्थीतत्पुरुषः)] (क्रियाविशेषणे द्वितीयायाम् एकवचनम्)
भ्रमन्ती– [√भ्रमु अनवस्थाने+शतृ, भ्रमत्+ङीप्] (भ्रमन्ती, प्रथमायाम् एकवचनम्)
त्वं– (युष्मद्, प्रथमायाम् एकवचनम्)
स्वामिगौरवं– [स्वामिनः गौरवम् स्वामिगौरवम् (षष्ठीतत्पुरुषः), गुरोः भाव गौरवम्, गुरु+अण्] (स्वामिगौरव, द्वितीयायाम् एकवचनम्)
वर्धय– [√वृधु वृद्धौ+णिच्] (वर्धि, लोटि मध्यमपुरुषे एकवचनम्)

**पदार्थाः–**

| | |
|---|---|
| ललज्जिह्वा | लोलजिह्वा |
| कुक्कुरी | शुनी |
| दिवानिशं | अहर्निशं |
| गृहे | भवने |
| भोजनार्थं | खादनाय |
| भ्रमन्ती | अटन्ती |
| स्वामिगौरवं | पतिसम्मानं |
| वर्धय | एधय |

**सरलार्थः–**

रङ्गिणि! त्वं भोजनाय लालायिता सती नक्तन्दिवं लोलरसना शुनी इव गृहे गृहे



CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection.



अटन्ती पत्युः गौरवं वर्धय।

**विशिष्टं व्याख्यानम्–**

कपालिनः वचनम् इदम्। तान्त्रिकः परिवारस्य सर्वान् चिपिटकव्रतपालनाय उपादिशत्। तदा चिपिटकभक्षणे क्लेशं सूचयित्वा चिपिटकचर्वणं निराकृतवती। तदा कपाली अवदत् यत्, यदि रङ्गिणी व्रतपालनं न चिकीर्षति तर्हि सा विधवा भवितुं सज्जा भवतु इति। ततः तान्त्रिकम् उद्दिश्य स कथितवान् यत्, नहि स नार्याः तर्जनेन गर्जनेन वा भीतः अस्ति। अतः तान्त्रिकः अनुष्ठानस्य प्रक्रियाम् अनुवर्तयतु इति। एतत् श्रुत्वा कुपिता रङ्गिणी कथयति, यदि कपाली न रङ्गिण्याः तर्जनेन बिभेति तर्हि स एकः एव गृहे तिष्ठतु। रङ्गिणी गृहात् निर्गमिष्यति। नहि चिपिटकभक्षणाय गृहस्य आश्रयः अपेक्ष्यते। यतः मुष्टिमितं चिपिटकं सा भिक्षया अपि उपार्जयितुं शक्ष्यति। यस्मिन् गृहे तस्याः वचनस्य मूल्यं नास्ति तस्मिन् गृहे चिपिटकमुष्टिभक्षणाय अवस्थानं न अपेक्षितम्।

वस्तुतः विधवा भव इति अभिशापेन रङ्गिणी अतीव कुपिता अभवत्। तस्याः कथनस्य तात्पर्यम् अस्ति यत् यदि पत्युः जीनवरक्षार्थं तया चिपिटकचर्वणं करणीयं तर्हि सा करिष्यति। किन्तु तदर्थं तया गृहे स्थातव्यं नास्ति। सा मासत्रयं यावत् भिक्षां याचित्वा अपि चिपिटकमुष्टिम् उपार्जयिष्यति, किन्तु कपालिनः गृहे न स्थास्यति। एतत् श्रुत्वा चकितः कुपितः च कपाली भर्त्सयति रङ्गिणीं प्रकृतश्लोकेन। कपाली रङ्गिणीं बहिर्गमनाद् वारयितुं कथयति यत् यदि रङ्गिणी भिक्षां याचिष्यते तर्हि तस्य अपमानः भविष्यति। यदि रङ्गिणी पत्युः अपमानम् इच्छति तर्हि सा गच्छेद् इति। अत्र व्यङ्ग्येन रङ्गिणी न गच्छतु इति एव सूचयितुम् इच्छति कपाली।

अत्र कपालिनः रङ्गिण्याः च आचरणं सतीशिवयोः आचरणम् अनुकरोति। सती यदा अनिमन्त्रिता अपि दक्षयज्ञसभां गन्तुम् इच्छति तदा शिवः तां वारयति। शिवस्य वचनम् उल्लङ्घ्य यदा सती पित्रालयं गन्तुम् ईहते तदा शिवः तां निन्दति स्म। अत्र अपि रङ्गिण्याः वचने आदरम् अप्रदर्शयन् कपाली तां निन्दति।

**छन्दः–**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र प्रथमे पादे सप्तमं दीर्घं नास्ति किन्तु गुरु भवति।। अन्यत्र लक्षणं सङ्गच्छते।

**आलङ्काराः–**

**उपमा–** कुक्कुर्या साकं रङ्गिण्याः सादृश्यवर्णनात् उपमा। पूर्णोपमा अत्र।

अत्र वर्धय स्वामिगौरवम् इति विधिना गमनस्य निषेधः ध्वन्यते। अतः अत्र संलक्ष्यक्रमः वस्तुध्वनिः।

अङ्कः शून्ययुतो ग्राह्यः स्वर्णत्रैगुण्यकर्मणि।
शून्यहीनो यदा ह्यङ्कः शङ्क्यः सर्वलयस्तदा॥

**अन्वयः–**

स्वर्णत्रैगुण्यकर्मणि शून्ययुतः अङ्कः ग्राह्यः। हि शून्यहीनः अङ्कः यदा (गृह्यते) तदा सर्वलयः शङ्क्यः॥

**पदपरिचयः–**

स्वर्णत्रैगुण्यकर्मणि– [त्रिगुणस्य भावः त्रैगुण्यम्। त्रिगुण+ष्यञ्, स्वर्णत्रैगुण्याय कर्म (चतुर्थीतत्पुरुषः)] (स्वर्णत्रैगुण्यकर्म, सप्तम्याम् एकवचनम्)
शून्ययुतः– [शून्येन युतः (तृतीयातत्पुरुषः)] (शून्ययुत, प्रथमायाम् एकवचनम्)
अङ्कः– (अङ्क, प्रथमायाम् एकवचनम्)
ग्राह्यः– [√ग्रह उपादाने+ण्यत्] (ग्राह्य, प्रथमायाम् एकचवनम्)
शून्यहीनः– [शून्येन हीनः (तृतीयातत्पुरुषः), √ओहाक् त्यागे+क्त हीन] (शून्यहीन, प्रथमायाम् एकवचनम्)
हि– (अव्ययम्)
यदा– (अव्ययम्)
(गृह्यते)– (√ग्रह उपादाने; कर्मणि लटि प्रथमायाम् एकवचनम्)
तदा– (अव्ययम्)
सर्वलयः– [सर्वेषां लयः (षष्ठीतत्पुरुषः)] (सर्वलय, प्रथमायाम् एकवचनम्)
शङ्क्यः– [√शकि शङ्कायाम्+ण्यत्] (शङ्क्य, प्रथमायाम् एकचवनम्)

**पदार्थाः–**

| | |
|---|---|
| स्वर्णत्रैगुण्यकर्मणि | सुवर्णस्य त्रिगुणत्वसम्पादके कार्ये |
| शून्ययुतः | शून्यसंवलितः |
| अङ्कः | राशिः |
| ग्राह्यः | ग्रहीतव्यः |
| हि | यतः |
| शून्यहीनः | शून्यरहितः |
| अङ्कः | राशिः |
| यदा | यदा |
| तदा | तदा |
| सर्वलयः | सर्वनाशः |
| शङ्क्यः | शङ्कनीयः |

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection





**सरलार्थः–**

सुवर्णस्य त्रिगुणतासम्पादने क्रियानुष्ठाने सर्वदा शून्ययुक्तः अङ्कः यथा दश, विंशतिः इत्यादयः सङ्ख्याः ग्रहीतव्याः। अन्यथा यदि शून्यरहिता सङ्ख्या स्वीक्रियते तर्हि सर्वनाशस्य आशङ्का वर्तते।

**विशिष्टं व्याख्यानम्–**

इदं तान्त्रिकस्य वचनम्। तान्त्रिकः अनुष्ठीयमानायाः क्रियायाः दक्षिणारूपेण एकं हरीतकीफलम् एव अयाचत। चिपिटकचर्वणव्रतपालनस्य उपदेशं परिवारस्य सर्वेभ्यः प्रादात्। ततः सुवर्णस्य त्रिगुणत्वसम्पादनकर्मणः विषये स कपालिनम् अबोधयत्। एतेन कारणत्रितयेन कपाली तान्त्रिके विश्वासम् अकरोत्। तथापि स्वभावकृपणः कपाली दशतोलकमितस्य सुवर्णस्य दाने प्राप्तसन्देहः एकतोलकमितं सुवर्णम् एव दातुम् ईहते। तदा अधिकं सुवर्णं जिघृक्षुः तान्त्रिकः इमं श्लोकं श्रावयति।

**छन्दः–**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र तृतीये पादे सप्तमं दीर्घं नास्ति किन्तु गुरु भवति। अन्यत्र लक्षणं सङ्गच्छते।

**अलङ्कारः–**

**छेकानुप्रासः–** ङ्क इति व्यञ्जनसङ्घातस्य आवृत्त्या छेकानुप्रासः

घट त्वं धर्मरूपोऽसि जनभाग्यप्रदायकः।
स्थिरो भव स्थिरो भव स्थां स्थां स्थीं स्थीं स्थिरो भव॥

**अन्वयः-**

घट! त्वं धर्मरूपः जनभाग्यप्रदायकः असि। स्थिरः भव, स्थिरः भव, स्थां स्थां स्थीं स्थीं स्थिरः भव।

**पदपरिचयः-**

घट- (घट, सम्बोधने प्रथमायाम् एकवचनम्)
त्वं- (युष्मद्, प्रथमायाम् एकवचनम्)
धर्मरूपः- [धर्मः रूपं यस्य (ब्रहुव्रीहिः) ] (धर्मरूप, प्रथमायाम् एकवचनम्)
जनभाग्यप्रदायकः- [जनानां भाग्यं (षष्ठीतत्पुरुषः) जनभाग्यस्य प्रदायकः (षष्ठीतत्पुरुषः)] (जनभाग्यप्रादायक, प्रथमायाम् एकवचनम्)
असि- (√अस भुवि; लटि मध्यमपुरुषे एकवचनम्)
स्थिरः- (स्थिर, प्रथमायाम् एकवचनम्)
भव- (√भू सत्तायाम्; लटि मध्यमपुरुषे एकवचनम्)
स्थां- (अव्ययम्)
स्थीं- (अव्ययम्)

**पदार्थाः-**

| | |
|---|---|
| घट | कलश |
| धर्मरूपः | धर्मस्वरूपः |
| जनभाग्यप्रदायकः | जनस्य सौभाग्यदायकः |
| असि | भवसि |
| स्थिरः | निश्चलः |
| भव | एधि |

**सरलार्थः-**

हे कलशदेव! त्वं साक्षाद् धर्मः। त्वं जनेभ्यः सौभाग्यं प्रददासि। त्वम् अत्र स्थिरः भव।





**विशिष्टं व्याख्यानम्-**

तान्त्रिकस्य मन्त्रोच्चारणम् इदम्। स्वस्त्ययनकर्मार्थं घटं स्थापयन् स इमं मन्त्रम् अपठत्। वस्तुतः एतादृशः मन्त्रः कोऽपि नास्ति। स स्वयम् इदं पद्यं कल्पयित्वा अवोचत्। कर्मकाण्डे प्रायः सर्वेषु अपि कर्मसु घटस्थापनस्य परम्परा सुप्रसिद्धा। घटम् आरुह्य सर्वे देवाः तिष्ठन्ति इति हि शास्त्रस्य सङ्केतः। तस्मात् घटे एव सर्वेषाम् अपि देवानां पूजा क्रियते। अतः घटस्थापनं प्रायः सर्वेषाम् अपि कर्मणाम् अनिवार्यम् अङ्गम्। घटस्थापनप्रक्रियायाम् अन्तिमं सोपानं भवति घटस्य स्थिरीकरणम्। स्थिरीकरणात् परं विसर्जनात् पूर्वं पुनः घटस्य चलनं न भवेत् इति प्रथा। अत्र अपि घटस्थापनं कुर्वन् घटस्य स्थिरीकरणाय इमं मन्त्रं पठति तान्त्रिकः। अत्र स्थां स्थां स्थीं स्थीम् इति मन्त्रांशः। एतादृशानि एकाक्षरबीजानि तन्त्रशास्त्रे प्रसिद्धानि सन्ति। तादृशं बीजम् अत्र प्रयुक्तम् अस्ति तान्त्रिकेण।

**छन्दः-**

अस्मिन् श्लोके अपि अनुष्टुप् छन्दः। अत्र तृतीये पादे सप्तमं दीर्घं नास्ति। अन्यत्र लक्षणं सङ्गच्छते।

**अलङ्कारः-**

**वृत्यनुप्रासः-** सकारस्य थकारस्य असकृद् आवृत्त्या वृत्यनुप्रासः।
**श्रुत्यनुप्रासः-** दन्त्यवर्णानाम् असकृद् आवृत्त्या श्रुत्यनुप्रासः।
**यमकम्-** स्थिरो भव इत्यस्य आवृत्त्या यमकम्।
**रूपकम्-** घटे धर्मस्य अभेदारोपात् रूपकम्।

CC-0. Kavikulguru Kalidas Sanskrit University Ramtek Collection